तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

कर्म उक्तं ज्ञानं च । तत्र न द्वयोः प्राधान्यं युक्तम् अपितु ज्ञानस्य । तद्बलेन क्षपणीयत्वं यदि कर्मणां 'बुद्धियुक्तो जहातीमे' इत्यादिनयेन, मूलत एव तत् कर्मणा किं प्रयोजनमिति प्रश्नाभिप्रायः ॥ २ ॥

श्रीभगवांस्तूत्तरं ददाति

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥

लोके एषा द्वयी गतिः प्रसिद्धा । सांख्यानां ज्ञानं प्रधानं योगिनां च कर्मेति । मया तु सैकैव निष्ठोक्ता ज्ञानक्रियामयत्वात्संवित्तत्त्वस्येति भावः ॥ ३ ॥

तथाहि—

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

ज्ञानं कर्मणा रहितं न भवति, कर्म च कौशलोपेतं ज्ञानरहितं न भवति, इत्येकमेव वस्तु ज्ञानकर्मणी । तथा चोक्तं

'न क्रियारहितं ज्ञानं न ज्ञानरहिता क्रिया ।
ज्ञानक्रियाविनिष्पन्न आचार्यः पशुपाशहा' ॥

---

१ तर्हि इति क० पाठः 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायात्

इति । तस्माज्ज्ञानान्तर्वर्ति कर्मापरिहार्यम्; यतः परवश एव कायवाङ्मनसां परिस्पन्दात्मकत्वात् अवश्यं किंचित्करोति ॥ ५ ॥

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान्विमूढात्मा मूढाचारः स उच्यते ॥ ६ ॥

कर्मेन्द्रियैश्चेन्न करोति, अवश्यं तर्हि मनसा करोति । प्रत्युत मूढाचारः[1]–मानसानां कर्मणामत्यन्तमपरिहार्यत्वात् ॥ ६ ॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥

कर्मसु क्रियमाणेषु न ज्ञानहानिः–मनसोऽव्यापारे यन्त्रपुरुषवत्कर्मणः क्रियमाणत्वात् ॥ ७ ॥

अतः

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥

नियतं–शास्त्रीयं कर्म कुरु शरीरयात्रामात्रस्यापि कर्माधीनत्वात् । ८।

यतः

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥

यज्ञार्थात्–अवश्यकरणीयात् अन्यानि कर्माणि बन्धकानि । अवश्यकर्तव्यं मुक्तफलसङ्गतया क्रियमाणं न फलदम् ॥ ९ ॥

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।

---

१ मिथ्याचार इति ग० पाठः

**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥**

प्रजापतिः—परमात्मा प्रजाः सहैव कर्मभिः ससर्ज । उक्तं च तेन प्रजानां कर्मभ्य एव प्रसवः सन्तानः, एतान्येव चेष्टं संसारं मोक्षं वा दास्यन्ति । सङ्गात्संसारं मुक्तसङ्गत्वान्मोक्षम् ॥ १० ॥

यत्र येषां मोक्षप्राधान्यं तैरेव विषयाः सेव्या इत्युच्यते

**देवान्भावयतानेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**

देवाः—क्रीडनशीला इन्द्रियवृत्तयः करणेश्वर्यो देवता रहस्यशास्त्रप्रसिद्धाः, ता अनेन कर्मणा तर्पयत—यथासंभवं विषयान्भक्षयतेत्यर्थः । तृप्ताश्च सत्यस्ता वो—युष्मान् आत्मन एव स्वरूपमात्रोचितापवर्गान् भावयन्तु—स्वात्मस्थितियोग्यत्वात् । एवमनवरतं व्युत्थानसमाधिसमयपरम्परायामिन्द्रियतर्पणतदात्मसाद्भावलक्षणे परस्परभावने सति शीघ्रमेव परमं श्रेयः—परस्परभेदविगलनलक्षणं ब्रह्म प्राप्स्यथ ॥ ११ ॥

न केवलमित्थमपवर्गे यावत्सिद्धिलाभेऽप्ययं मार्ग इत्याह

**इष्टान्कामान्हि वो देवा दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥**

यज्ञतर्पितानि हीन्द्रियाणि स्थितिं बध्नन्ति यत्र क्वापि ध्येयादाविति । अत एव तद्व्यापारे सति तेषां विषयाणां स्मृतिसंकल्पध्यानादिना भावाः—विषया इन्द्रियैरेव दत्ताः, यदि तेषामेव उपभोगाय न दीयन्ते तर्हि स्तेनत्वं—चौर्यं स्यात् छद्मचारित्वात् । उक्तं हि पूर्वमेव भगवता 'मूढाचारः स उच्यते' इति । अ-

तोऽयं वाक्यार्थः—यः सुखोपायं सिद्धिमपवर्गं वा प्रेप्सति, तेन इन्द्रियकौतुकनिवृत्तिमात्रफलतयैव भोगा यथोपनतमासेव्या इति ।१२।

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥**

अवश्यकर्तव्यतारूपशासनमहिमायातान्भोगान् येऽश्नन्ति अवान्तरव्यापारमात्रतया, अत एव च पृथग्फललाभावाङ्गतया । अथ च—इन्द्रियात्मकदेवगणतर्पणलक्षणयज्ञात् अवशिष्टम्—अन्तःसारस्वात्मस्थित्यानन्दलक्षणविघसं येऽश्नन्ति—तत्रारूढा भवन्ति तदुपादेयोपायतया तु विषयभोगं वाञ्छन्ति, ते सर्वकिल्बिषैः—शुभाशुभैर्मुच्यन्ते । ये तु आत्मकारणादिति—अविद्यावशात् स्थूलमेव विषयभोगं परत्वेन मन्वानाः 'आत्मार्थमिदं वयं कुर्मः'—इति कुर्वते । त एव अघं—शुभाशुभात्मकं लभन्ते ॥ १३ ॥

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**
**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

अन्नात्—अविभागभोग्यस्वभावात् कथञ्चिन्मायाविद्याकालाद्यनेकापरपर्यायात् भूतानि विचित्राणि भवन्ति । तच्चान्नं पर्जन्यात्—अविच्छिन्नसंवित्स्वभावादात्मनः भोक्तृतत्त्वात्मलाभत्वाद्भोग्यतायाः । स च पर्जन्यो—भोक्ता यज्ञात् भोगक्रियायत्तत्वाद्भोक्तृत्वस्य । भोगक्रिया च कर्मणः-क्रियाशक्तिस्वातन्त्र्यबलात् । तच्च स्वातन्त्र्यम्—अविच्छिन्नम-

पि अनवच्छिन्नानन्तस्वातन्त्र्यपूर्णसमुच्छलन्महेश्वरभावपरमात्मब्रह्म-संस्पर्शवशात् । तच्च उच्छलदच्छानाच्छादितैश्वर्यं ब्रह्म अक्षरात्-प्रशान्ताशेषैश्वर्यतरङ्गात्संविन्मात्रात् । इत्येवं सुव्यवस्थितोऽयं यज्ञः षडरं चक्रं वाहयन् अरात्रयसन्धानादपवर्गम् अरात्रयतन्त्र-णाद्व्यवहारमासूत्रयति । इति विद्याविद्योल्लासतरङ्गसुभगं ब्रह्म यज्ञे एव प्रतिष्ठितम् । अन्ये तु—अन्नं तावद्वीर्यलोहितक्रमेण भूतका-रणम्, अन्नं च वृष्टिद्वारेण पर्जन्यात्, सोऽपि[1] यज्ञात्, यज्ञः क्रि-यातः, सा च ज्ञानपूर्विका, ज्ञानमक्षरात्, इति । अपरे[2] तु—अन्नम्—अद्यमानं विषयपञ्चकमाश्रित्य भूतानि—इन्द्रियाणि, विषया-श्चात्मस्फुरितरूपाः । अत आत्मैव विषयोपभोगेन पोष्यते । अ-तश्च सर्वगतं ब्रह्म कर्मणि प्रतिष्ठितम्—तन्मयत्वात्तस्य ॥ १५ ॥

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥**

यस्त्वेवं नाङ्गीकरोति स पापमयः । यतः स इन्द्रियेष्वेव रम-ते नात्मनि ॥ १६ ॥

**यश्चात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥**
**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

---

१ सोऽपीत्यनन्तरम् 'अग्नौ प्रास्ताहुतिरादित्यमेति, ततो वृष्टिः' इत्यधिकः पाठः क० ख० घ० पुस्तकेषु २ ल्यब्लोपे पञ्चमीति पञ्चमीमाश्रित्य व्याचक्षते

आत्मरतेस्तु—कर्मेन्द्रियव्यापारतयैव कुर्वतः करणाकरणेषु समता। अत एव नासौ भूतेषु किंचिदात्मप्रयोजनमपेक्ष्य निग्रहानुग्रहौ करोति, अपितु करणीयमिदम्—इत्येतावता ॥ १८ ॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ;
लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ १९ ॥

तदत्र कुर्वतामपि सिद्धौ जनकादयो दृष्टान्ताः ॥ १९ ॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २० ॥
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं प्रवर्तेऽथ च कर्मणि ॥ २१ ॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तेरन्मनुष्याः पार्थ सर्वशः ॥ २२ ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २३ ॥
तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ २४ ॥
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

प्राप्तप्रापणीयस्य परिपूर्णमनसोऽपि कर्मप्रवृत्तौ लोकानुग्रहः प्रयोजनम्—इत्यत्र श्रीभगवानात्मानमेव दृष्टान्तीकरोति। तस्मादसक्त

एव करणीयं कर्म कुर्यात् । किंच विदितवेद्यः कर्म चेत् त्यजेत् तल्लोकानां दुर्भेद एवैकप्रसिद्धपक्षशिथिलितास्थाबन्धत्वेनाप्ररूढिलक्षणो जायते । यतः कर्मवासनां च न मोक्तुं शक्नुवन्ति ज्ञानधारां च नाश्रयितुम् । अथ च शिथिलीभवन्ति ॥ २५ ॥

यतस्ते न सम्यग्ज्ञानेन पूताः; अतो बुद्धेर्भेदनं-विचालनं तेषां परमोऽनर्थ इत्यनुग्रहाय भेदयेन्न धियमेषाम्, तदाह

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥

स्वयं चैवं बुद्धयमानः कर्माणि कुर्यात् । न च लोकानां बुद्धिं भिन्द्यात् ॥ २६ ॥

अज्ञानमित्युक्तं; तदज्ञत्वं दर्शयति

प्रकृतेः क्रियमाणानि गुणैः कर्माणि भागशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥

प्रकृतिसंबन्धिभिर्गुणैः सत्त्वाद्यैः किल कर्माणि क्रियन्ते । मूढश्चाहं कर्तेत्यध्यवस्य मिथ्यैवात्मानं बध्नाति ॥ २७ ॥

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणार्थे वर्तन्ते इति मत्वा न सज्जते ॥ २८ ॥

गुणकर्मविभागतत्त्ववित्तु, प्रकृतिः करोति, मम किमायातम्- इत्यात्मानं मोचयति ॥ २८ ॥

कर्मसङ्गिनामित्युक्तम्, तत् कर्मसङ्गित्वं दर्शयति

---

१ दुराग्रह इत्यर्थः २ अध्यस्य, इति घ० पाठः ।

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।**

**तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥ २९ ॥**

प्रकृतिसंबन्धिभिर्गुणैः सत्त्वाद्यैः कृतेषु कर्मसु मूढाः सज्जन्ति सत्त्वादिगुणमाहात्म्यात् । तस्माद्युक्तः सन् जुषेत कर्माणि इत्युक्तम् ॥ २९ ॥

तत्र कथम्, इति स्फुटयति–

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।**

**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥**

मयि सर्वाणि कर्माणि 'नाहं कर्ता'–इति संन्यस्य, 'स्वतन्त्रः परमेश्वर एव सर्वकर्ता नाहं कश्चित्'–इति निश्चित्य लोकानुग्रहं चिकीर्षुर्लोकाचारं युद्धात्मकमनुतिष्ठ ॥ ३० ॥

**ये मे मतमिदं नित्यमनुवर्तन्ति मानवाः ।**

**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते सर्वकर्मभिः ॥ ३१ ॥**

एतच्च मतमाश्रित्य यः कश्चिद्यत्किंचित्करोति, तत्तस्य न बन्धकम् ॥ ३१ ॥

**ये त्वेतदभ्यसूयन्तो नानुवर्तन्ति मे मतम् ।**

**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥**

एतस्मिंस्तु ज्ञाने ये न श्रद्धालवस्ते विनष्टाः–अविरतं जन्ममरणादिभयभावितत्वात् ॥ ३२ ॥

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**

**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

योऽपि च ज्ञानी न[1] तस्य व्यवहारे भोजनादौ विपर्यासः कश्चित्, अपितु सोऽपि सत्त्वाद्युचितमेव चेष्टते । एवमेव जानन् यतो भूतानां–पृथिव्यादीनां प्रकृतौ विलयः, आत्मा चाकर्ता नित्यमुक्तः, इति कस्य जन्मादिनिग्रहः ॥ ३३ ॥

कथं तर्हि बन्धः ? इत्थमुच्यते—

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥**
**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मोदयादपि ॥ ३५ ॥**

संसारी च प्रतिविषयं रागं द्वेषं च गृह्णाति । यतः कर्माणि आत्मकर्तृकाण्येव विमूढत्वादभिमन्यते, इति सममपि भोजनादिव्यवहारं कुर्वतोर्ज्ञानिसंसारिणोरस्त्ययं विशेषः । अयं नः सिद्धान्तः–सर्वथा मुक्तसंगस्य स्वधर्मचारिणो नास्ति कश्चित्पुण्यपापात्मको बन्धः । स्वधर्मो हि हृदयादनपायी स्वरसनिरूढ[2] एव । न तेन कश्चिदपि रिक्तो जन्तुर्जायते–इत्यत्याज्यः ॥ ३५ ॥

अर्जुन उवाच

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छमानोऽपि बलादाक्रम्येव नियोजितः ॥ ३६ ॥**

पापं पापतया विदन्नपि जनः कथं तत्र प्रवर्तते ? इति प्रश्नः । अस्य प्रश्नस्योत्थानेऽयमाशयः–स्वधर्मो यदि स्वहृदयादनपायित्वाद-

---

१ तदुक्तं–'लौकिके व्यवहारे हि सदृशौ बालपण्डितौ' इति २ निगूढ एवेति क० पाठः

त्याज्यः; कथं तर्ह्यधर्माचरणमेषामिति । कोऽयं स्वधर्मो नाम, येनारिक्तो जन्तुः—इत्युक्तं भवति ॥ ३६ ॥

अत्रोत्तरं 'सत्यपि स्वधर्मे हृदिस्थे आगन्तुकावरणकृतोऽयं विप्लवः, न तु तदभावकृतः',—इत्याशयेन—

श्रीभगवानुवाच

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

द्वाभ्यामेतच्छब्दाभ्यामनयोरत्यन्तावैषम्यं सूच्यते; एतौ च कामक्रोधौ नित्यसंबन्धिनावन्योन्याविनाभावेन वर्तेते इत्येकरूपतयैव व्याचष्टे । एष च महस्य—सुखस्य अशनो—ग्रासकारकः; महतः पापस्य हेतुत्वाच्च क्रोध एव पापदायी । एनं च वैरिणं प्राज्ञो जानीयात् ॥ ३७ ॥

ननु अर्थाद्युपघातकं ज्ञातस्वरूपं च वस्तु हातुं सुशकं भवेत्—इत्यभिप्रायेणार्जुन उवाच

**भवत्येष कथं कृष्ण कथं चैव विवर्धते ।**
**किमात्मकः किमाचारस्तन्ममाचक्ष्व पृच्छतः ॥ ३८ ॥**

अस्य चोत्पत्तौ किं कारणं, वर्धने च को हेतुः, स्वरूपं चास्य कीदृक्, उत्पन्नो रूढीभूतश्च[1] किमाचरति—किं करोति ? इति प्रश्नाः ॥ ३८ ॥

अत्रोत्तरं—                श्रीभगवानुवाच

**एष सूक्ष्मः परः शत्रुर्देहिनामिन्द्रियैः[2] सह ।**

---

१ दृढीभूतश्चेति क॰ पाठः २ इन्द्रियेषु ह—इति ग॰ पाठः

सुखतन्त्र इवासीनो मोहयन्पार्थ तिष्ठति ॥ ३९ ॥

एष तावत्सूक्ष्मः–उत्पत्तिसमयेऽक्षय इन्द्रियेषु । एवं च वर्तमानः सुखं तन्त्रयितुमिवोत्पद्यते, वस्तुतस्तु दुःखमोहमयः–तामसत्वात् । अत एव मोहयन् ॥ ३९ ॥

कामक्रोधमयो घोरः स्तम्भहर्षसमुद्भवः ।
अहंकारोऽभिमानात्मा दुस्तरः पापकर्मभिः ॥ ४० ॥

स्तम्भः–कुलाद्यभिमानः, तत्कृतो यो हर्षः–'अहमीदृशः'–इति । अत एवाह–अहंकार इति ॥ ४० ॥

हर्षमस्य निवर्त्यैष शोकमस्य ददाति च ।
भयं चास्य करोत्येष मोहयंस्तु मुहुर्मुहुः ॥ ४१ ॥

अत एव च गर्वाद्वर्धतेऽभिमानस्वभावः, सुखबुद्धिप्रकारेण च जायते, इति त्रयः प्रश्नाः परिहृताः ॥ ४१ ॥

स एष कलुषी क्षुद्रश्छिद्रप्रेक्षी धनञ्जय ।
रजःप्रवृत्तो मोहात्मा मनुष्याणामुपद्रवः ॥ ४२ ॥

स एष इति छिद्राणि प्रेक्षते–'अमुना छिद्रेणास्येहलोकपरलोकौ नाशयामि'–इति । तथा च मोक्षधर्मेषु

यत्क्रोधनो यजते यद्ददाति यद्वा तपस्तप्यते यज्जुहोति ।
वैवस्वतस्तद्धरतेऽस्य सर्वं मोघः श्रमो भवति क्रोधनस्य ॥

इति । रजसः प्रवृत्तस्तमोरूप इत्यर्थः ॥ ४२ ॥

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।
यथोल्वेनावृतो गर्भस्तथानेनायमावृतः ॥ ४३ ॥

दृष्टान्तत्रयेण दुरपसर्पत्वम्, अकार्यकरत्वं, जुगुप्सास्पदत्वं चोक्तम्। अयमिति—आत्मा ॥ ४३ ॥

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ४४ ॥**

कामरूप इच्छायां यतश्चरति । अनलेन च—अग्निनेव पूरयितुमशक्येन—दृष्टादृष्टद्वयदाहकत्वात् ॥ ४४ ॥

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४५ ॥**

आदौ इन्द्रियेषु सत्सु तिष्ठति । यथा चक्षुषा शत्रुर्दृष्ट इन्द्रियप्रदेशे एव क्रोधमात्मनो जनयति । ततो मनसि—संकल्पे । ततो बुद्धौ—निश्चये । एतद्द्वारेण मोहं जनयन् ज्ञानं नाशयति ॥ ४५ ॥

अस्य निवारणे उपायमाह

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहीह्येनं ज्ञानविज्ञाननाशनम् ॥ ४६ ॥**

तस्मादादाविन्द्रियाणि नियमयेत्—क्रोधादिकमिन्द्रियेषु प्रथमं न गृह्णीयात् । ज्ञानं—ब्रह्म, विज्ञानं च—भगवन्मयीं क्रियां नाशयति । हि—यतः; अतः पाप्मानं क्रोधं त्यज । अथवा—ज्ञानेन—मनसा, विज्ञानेन— बुद्ध्या च नाशनं—वारणं कृत्वा इति क्रियाविशेषणम् इन्द्रियेषूत्पन्नं संकल्पे न गृह्णीयात् । संकल्पितं वा न निश्चिनुयादिति तात्पर्यम् ॥ ४६ ॥

अत्र युक्तिं श्लोकद्वयेनाह

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४७ ॥
एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४८ ॥

यत इन्द्रियाणि शत्रुलक्षणाद्विषयादन्यानि । तेभ्यश्चान्यन्मनः । तस्मादपि बुद्धेर्व्यतिरेकः । बुद्धेरपि यस्यान्यस्वभावत्वं स आत्मा । एवमिन्द्रियोत्पन्नेन क्रोधेन कथं मनसो बुद्धेरात्मनो वा क्षोभः ? इति पर्यालोचयेदित्यर्थः । रहस्यविदां त्वयमाशयः–बुद्धेर्यः परत्र वर्तते परोऽहंकारः–'सर्वमहम्'–इत्यभेदात्मा, स खलु परमोऽभेदः । अत एव च परिपूर्णस्य खण्डनाभावान्न क्रोधादय उदयन्ते । अतः परमहंकारं–परोत्[1]साहसंविदात्मकं गृहीत्वा क्रोधम् अविद्यात्मानं शत्रुं जहीति शिवम् ॥ ४८ ॥

अत्र संग्रहश्लोकः

धनानि दारान्देहं च योऽन्यत्वेनाधिगच्छति ।
किं नाम तस्य कुर्वन्ति क्रोधाद्याश्चित्तविभ्रमाः ॥ ३ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे तृतीयोऽध्यायः ॥ ३ ॥

---

१ परमोत्साहामिति ख० पाठः

अथ

# चतुर्थोऽध्यायः

श्रीभगवानुवाच

**एवं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥**

**एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनैव महता योगो नष्टः परन्तप ॥ २ ॥**

एतच्च गुरुपरम्परया प्राप्तमपि अद्यत्वे नष्टम्, इत्यनेन भगवानस्य ज्ञानस्य दुर्लभतां गौरवं च प्रदर्शयति ॥ २ ॥

**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।**
**भक्तोऽसि मे सखा चेति रहस्यमेतदुत्तमम् ॥ ३ ॥**

भक्तोऽसि मे सखा चेति; त्वं भक्तो मत्परमः सखा च । चशब्देनान्वाचय[1] उच्यते । तेन यथा[2] भिक्षाटने भिक्षाणां प्राधान्यं, गवानयने त्वप्राधान्यम् । एवं भक्तिरत्र गुरुं प्रति प्रधानं, न सखित्वमपीति तात्पर्यार्थः ॥ ३ ॥

अर्जुनो भगवत्स्वरूपं जानन्नपि लोके स्फुटीकर्तुं पृच्छति—

अर्जुन उवाच

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेवं विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥**

---

१ अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः २ 'भिक्षामट गांचानय' इति वाक्ये

श्रीभगवानुवाच

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ ५ ॥
अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मांशं सृजाम्यहम् ॥ ७ ॥

श्रीभगवान्किल पूर्णषाड्गुण्यत्वाच्छरीरसंपर्कमात्ररहितोऽपि स्थितिकारित्वात्कारुणिकतया आत्मांशं सृजति। आत्मा-पूर्णषाड्गुण्यः[1] अंशः-उपकारकत्वेनाप्रधानभूतो यत्र तदात्मांशं-शरीरं गृह्णातीत्यर्थः ॥ ७

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥
जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

अत एवास्य जन्म दिव्यं यत आत्ममायया योगप्रज्ञया स्वस्वातन्त्र्यशक्त्या आरब्धं, न कर्मभिः । कर्मापि दिव्यं-फलदानासमर्थत्वात् । यश्चैवमेतत्तत्त्वं वेत्ति-आत्मन्यप्येवमेव मन्यते, सोऽवश्यं भगवद्वासुदेवतत्त्वं जानाति ॥ ९ ॥

---

१ सर्वज्ञता, तृप्तिः, अनादिबोधः, स्वतन्त्रता, नित्यमलुप्तशक्तिः, अनन्तशक्तिश्चेति षाड्गुण्यम् ।

**वीतरागभयक्रोधा मन्मया मद्व्यपाश्रयाः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

तथा चैवं विदन्तः मन्मयत्वात्परिपूर्णेच्छत्वात् क्रोधादिरहिता निष्फलं कर्म करणीयं कुर्वाणा बहवो मत्स्वरूपमवाप्ताः ॥ १० ॥

यतः—

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥**

ये यथैव बुद्ध्या मामाश्रयन्ते, तान्प्रति तदेव स्वरूपं गृह्णस्तानुगृह्णामि । एवमेव मदीयं मार्गं मन्मया अमन्मयाश्च सर्वे एवानुवर्तन्ते ; नहि ज्योतिष्टोमादिरन्यो मार्गः, मदीयैव सा तथेच्छा । वक्ष्यते हि 'चातुर्वर्ण्यं मया सृष्टम्' इति । अन्यस्त्वाह—लिङर्थे लट् । यथा 'अतिरात्रे षोडशिनं गृह्णन्ति'—गृह्णीयुरित्यर्थः । एवमिहापि अनुवर्तन्ते—अनुवर्तेरन्निति ॥ ११ ॥

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥**

मानुष एव लोके भोगापवर्गलक्षणा सिद्धिर्नान्यत्र, इति ॥ १२ ॥

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागतः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥**
**न मां कर्माणि लिम्पन्ति न मे कामः फलेष्वपि ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥**

मम किल कथमाकाशकल्पस्य कर्मभिर्लेपः । आकाशप्रतिमत्वं

कामनाभावात्। इत्यनेन ज्ञानप्रकारेण यो भगवन्तमेवाश्रयते; सर्वत्र सर्वदा आनन्दघनं परमेश्वरमेव 'न वासुदेवात्परमस्ति किंचित्' इति नीत्या विमृशति, तस्य किं कर्मभिर्बन्धः ॥ १४ ॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥

तस्मादनया बुद्ध्या पवित्रीकृतस्त्वमपि कर्माणि–अवश्यकर्तव्यानि कुरु ॥ १५ ॥

अथोच्यते 'अकरणादेव सिद्धिः'–इति । तन्न; यतः

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ।१६।
कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥

कर्माकर्मणोर्विभागो दुष्परिज्ञानः । तथा च–विहितकर्मण्यपि मध्ये दुष्टं कर्मास्ति–अग्निष्टोम इव पशुवधः । विरुद्धेऽपि च कर्मणि शुभमस्ति कर्म । तथाहि हिंस्रप्राणिवधे प्रजोपतापाभावः । अकरणेऽपि च शुभाशुभं कर्मास्ति–वाङ्मनसकृतानां कर्मणामवश्यंभावात्, तेषां ज्ञानमन्तरेण दुष्परिहरत्वात् । अतः कुशलैरपि गहनत्वात्कर्म न ज्ञायते 'अनेन शुभकर्मणा शुभ-

---

१ 'नैकस्यार्थे बहून् हन्यादिति शास्त्रेषु निश्चयः ।
एकं हन्याद्बहूनां हि न पापी तेन जायते' ॥
इति उक्तत्वात् २ भावित्वादिति क० पाठः ।

मस्माकं भविष्यति, अनेन च कर्मणामनारम्भेण मोक्षो न भविष्यति'–इति । तस्माद्वक्ष्यमाणो विज्ञानवह्निरेवावश्यं सकलशुभाशुभकर्मेन्धनप्लोषसमर्थः शरणत्वेनान्वेष्य–इति भगवतोऽभिप्रायः ॥ १७ ॥

तमेवोद्बोधयितुमाह—

**कर्मण्यकर्म यः पश्यत्यकर्मणि च कर्म यः ।**
**स बुद्धिमान्मनुष्येषु स चोक्तः कृत्स्नकर्मकृत् ॥ १८ ॥**

कर्मणीति–आत्मीयेषु कर्मसु यः अकर्तृत्वादकर्मत्वं पश्यति प्रशान्ततया । अकर्मसु च–परकृतेषु आत्मकृतत्वं जानाति परिपूर्णोदितस्वरूपत्वेन । स एव सर्वस्य मध्ये बुद्धिमान्, कात्स्न्येंन–साकल्येनासौ कर्म करोति । अतोऽस्य केन कर्मणा फलं दीयताम्, इत्युदितदशायाम् । प्रशान्तत्वे तु कृत्स्नानि कर्माणि कृन्तति च्छिनत्ति । अतः सर्वमेव करोति न किंचिद्वा करोति–इत्युपनिषत् ॥ १८ ॥ *

---

* पुस्तकान्तरेष्वयमधिकः पाठः–कर्मणि–देहेन्द्रियक्रियायां अकर्म– स्वात्मनि निष्क्रियत्वम् 'श्रोत्रादीनि शब्दादिषु वर्तन्ते, वागादीनि वचनादानादौ मम किमायातम्', इत्येवंलक्षणं यः पश्येत् । अकर्मणि च–परैः प्रमातृभिः कृते कर्मणि पूजादौ कर्म–क्रियां जानाति;–'एते कर्तारः सर्वेऽहमेव'–इति दृष्ट्या 'पूजकैरविभेदेन सदा पूजेति पूजनम्' इति च सिद्धभाषाप्रामाण्यात् । स एव मनुष्येषु–सामान्यजनेषु मध्ये बुद्धिमान् । देहेन्द्रियादिष्वपि कर्तृत्वदर्शनादात्मनि निष्क्रियत्वदर्शनाच्च स एव कृत्स्नकर्मकृत्–कर्त्रन्तरेषु स्वरूपदृष्ट्यध्यवसायात् 'पूजनान्नास्ति मे तुष्टिर्नास्ति खेदो ह्यपूजनात् । पूजकैरविभेदेन सदा पूजेति पूजनम्' इति सोमानन्दपादाः । ननु परकृते कर्मणि कथं स्वकीयकर्मदर्शनम्–नह्यन्यकृतभोजनेन स्वकृत-*

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥

अत एव कामेषु–काम्यमानेषु फलेषु सङ्कल्पं विहाय क्रियमाणानि कर्माणि कथितकथयिष्यमाणस्वरूपे ज्ञानाग्नावनुप्रविश्य दह्यन्ते ॥ १९ ॥

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥ २० ॥

अभिप्रवृत्तोऽपि–आभिमुख्येन प्रवृत्तोऽपि ॥ २० ॥

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं[1] केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥

शरीरोपयोगि इन्द्रियव्यापारात्मकं कर्म शारीरं, यन्मनोबुद्धिभ्यां न तथानुरञ्जितम् ॥ २१ ॥

यदृच्छालाभसन्तुष्टो[2] द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२ ॥

---

* भोजनाभ्युपगमः । तस्मात् 'अकर्मणि च कर्म यः पश्येत्'–इति कथम्? इति चेत् । ज्ञानिनः एवंविधानुसंधानात्–इति ब्रूमः । यतो निष्पन्ननिष्कम्पविज्ञानशालिनः प्रमेयान्तरप्रमात्रन्तरजातं बहुविधमनुसंधानमस्ति । यथा 'य एवाहं घटादीन्वेद्मि स एव पटादीन्' । एवं चैत्रमैत्रादिप्रमात्रन्तरविषयमनुसंधानं ज्ञेयम् । अत एव सिद्धपादैरपि 'पूजकैरविभेदेन' इत्युपदिष्टम् । तस्मात्सुष्ठूक्तं–अकर्मणि चेति ॥ १८ ॥

१ शरीरस्थितिमात्रप्रयोजनमित्यर्थः २ अप्रार्थितोपनतो लाभो यदृच्छालाभः– 'अप्राप्तं नैव वाञ्छामि प्राप्तं नैव त्यजाम्यहम् । न हृष्यामि न कुप्यामि चराम्याजगरं व्रतम्' – इत्येवं प्रायस्तेन संतुष्टः–संजातालंप्रत्ययः

कर्मकर्तरि प्रयोगः स्वयमेव ह्यात्मा आत्मानं बध्नाति फलवासनाकालुष्यमुपाददान इत्यर्थः । अन्यथा जडानां कर्मणां बन्धने स्वातन्त्र्यं न तथा हृदयंगमम् ॥ २२ ॥

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायारभतः कर्म समग्रं प्रविलीयते ॥ २३ ॥**

यज्ञायेति–जातावेकवचनम् । यज्ञाः–वक्ष्यमाणलक्षणाः ॥ २३ ॥

यज्ञायेत्युक्तम्;–तत्स्वरूपं सामान्यं तावदाह

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥**

ब्रह्मण्यर्पणं–तत एव प्रवृत्तस्य पुनस्तत्रैवानुप्रवेशनं यस्य तत् । ब्रह्म–समग्रं विश्वात्मकं यदेतत्; हविस्तत् । ब्रह्मणि–परमबोधे प्रशान्तेऽग्नौ । ब्रह्मणा–येनकेनचित्कर्मणा हुतं-तद्दीप्त्यभिवृद्धये समर्पितम्, इतीदृशं ब्रह्मकर्मैवं समाधिर्यस्य योगिनस्तेन ब्रह्मैव गन्तव्यं ज्ञेयं नान्यत्किंचिदन्याभावात् । यदिवा तदर्थेन यदर्थाक्षेपादेवंसंबन्धः–यत्खलु ब्रह्मस्वरूपेण यजमानेन ब्रह्माग्नौ ब्रह्महविर्हुतं ब्रह्मणि ब्रह्मस्वभावदेवतोद्देशेनार्पणं यस्य, तदेवं भूतं यद्ब्रह्मकर्म, तदेव समाधिरात्मस्वरूपलाभोपायत्वात् तेन–ब्रह्मकर्मसमाधिना नान्यत्फलमवाप्यते अपितु ब्रह्मैवेति; 'ये यथा मां प्रपद्यन्ते'–इति हि निर्वाहितम् । मितस्वरूपीकृतमदात्मकयज्ञस्वभावा इति तादृशफलभागिनः–इत्युक्तम् । अपरिमितपरिपूर्णमदात्मकयज्ञस्वरूपवेदिनस्तु कथं परिमितफललवलाम्पट्यभागिनो भवेयुरिति तात्पर्यम् । इत्यनेन श्लोकेन वक्ष्यमाणैश्च श्लोकैः परमरहस्यमु-

पनिबद्धम् । तच्चास्माभिर्मितबुद्धिभिरपि यथाबुद्धि यथागुर्वाम्नायं च विवृतम् । मुखसंप्रदायक्रममन्तरेण नैतत् नभश्चित्रमिव चित्तमुपारोहतीति न वयमुपालम्भनीयाः । अत्र हविषोऽग्नेः करणानां च स्रुगादीनां क्रियायाश्च ब्रह्मविशेषणत्वमिति कैश्चिदुक्तं तदुपेक्ष्यमेव;–तेषां रहस्यसंप्रदायक्रमेऽक्षुण्णत्वात् ॥ २४ ॥

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

अपरे देवानि–क्रीडाशीलानि इन्द्रियाणि आश्रित्य यः स्थितो यज्ञो–निजनिजविषयगृहणलक्षणः तमेव परित उपासते–आमूलाद्विमृशन्त स्वात्मलाभं लभन्ते । अत एव ते योगिनः–सर्वावस्थासु सततमेव योगयुक्तत्वात् । नित्ययोगे ह्ययमत्र मत्वर्थीयः । एनमेव च विषयगृहणात्मकं यज्ञं यज्ञेनैव–तेनैव लक्षणेन अपरे–पूरयितुमशक्ये ब्रह्माग्नौ जुह्वति-इति कैश्चिद्व्याख्यातम् । मुनेस्तु पौर्वापर्याविरुद्धत्वाद्योऽर्थो हृदि स्थितस्तं प्रकाशयामः;–केचिद्योगयुक्ता सन्तो दैवं–नानारूपेन्द्रादिदेवतोद्देशेनैव बाह्यद्रव्यमयं यज्ञमुपाचरन्ति । तं च क्रियमाणमेव यज्ञं कर्तव्यमिदमित्येव बुद्ध्या फलानपेक्षया अपरे–दुष्पूरे ब्रह्माग्नावर्पयन्ति–इति द्रव्ययज्ञा अपि परं ब्रह्म यान्ति । यतो वक्ष्यते 'सर्वेऽप्येते यज्ञविदः'–इति । श्रुतिरपि 'यज्ञेन यज्ञमयजन्त देवाः'–इति ॥ २५ ॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥

अन्ये तु संयमाग्निष्विन्द्रियाणीति । संयमः–मनः, तस्य

येऽग्नयः—प्रतिपन्नभावभावनारूपा अभिलाषस्तोपका विस्फुलिङ्गाः, तेषु इन्द्रियाण्यर्पयन्ति । अत एव ते तपोयज्ञाः । इतरे ज्ञानप्रदीपितेषु फलदाहकेष्विन्द्रियाग्निषु विषयानर्पयन्ति—भोगवासनानिरासायैव भोगानभिलषन्तीत्युपनिषत् । तथा च मयैव लघ्व्यां प्रक्रियायामुक्तम्

'न भोग्यं व्यतिरिक्तं हि भोक्तुस्त्वत्तो विभाव्यते ।
एष एव हि भोगो यत्तादात्म्यं भोक्तृभोग्ययोः ॥'

इति । स्पन्देऽपि

'भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः' (स्प०, २नि०, ४श्लो०)

इति ॥ २६ ॥

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥**
**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥**

ते च सर्वान्—इन्द्रियव्यापारान्मानसान् मुखनासिकानिर्गमनमूत्राद्यधोनयनादीन्वायवीयांश्च आत्मनो—मनसः संयमहेतौ योगनाम्न्यैकाग्र्यवह्नौ सम्यक् ज्ञानपरिदीपिते पूरयितव्ये निवेशयन्ति,—गृह्यमाणं विषयं संकल्प्यमानं वा तदेकाग्रतयैव परित्यक्तान्यव्यापारतया बुद्ध्या गृह्णन्तीति तात्पर्यम् । तदुक्तं शिवोपनिषदि—

'भावेऽत्यक्ते निरुद्धा चिन्नैव भावान्तरं व्रजेत् ।
तदा तन्मयभावेन विकसत्यतिभावना' ॥ (वि० भै०, ६२श्लो०)

इति । एवं योगयज्ञा व्याख्याताः ॥ २७ ॥

एवं द्रव्ययज्ञस्तपोयज्ञो योगयज्ञश्चोक्तलक्षणाः । स्वाध्यायज्ञा-

नयज्ञाश्च ये–ते संप्रति लक्ष्यन्ते–

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥
अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥

प्राणम्–उदयमानं नादं प्रणवादिमात्रालयान्तम् अपाने–अस्तं याति स्वानन्दान्तःप्रवेशात्मनि जुह्वतीति पिण्डस्थैर्यात्मा स्वाध्यायः । शिष्यात्मना च नयानयग्रहणाय केचित् अस्तं यान्तमुदीयमाने संवेश्य तदेकीकारेणापवर्गदानात् आत्मनि शिष्यात्मनि च शोधनबोधनप्रवेशनयोजनरूपे स्वाध्याययज्ञे स्वपरानन्दमये प्रतिष्ठितमनसः । अत एव पूरकः प्रथममुक्तः, चरमं रेचकः । प्रथमेन च पादेन विषयभोगान्तर्मुखीकरणम् । द्वितीयेन महाविदेहधारणाक्रमाद्विषयग्रहणाय निःसरणं ध्वन्यते । अतश्च स्वाध्याययज्ञेभ्योऽन्ये ज्ञानयज्ञाः । एते एवोक्तव्यापारपरिशीलनावशपरिपूरितस्वात्मशिष्यात्ममनोरथाः द्वेऽप्येते गती निरुध्याहारं विषयभोगात्मकं नियम्य प्राणान्–सकलचित्तवृत्त्युदयान् प्राणेषु–परनिरानन्दोल्लासेषु जुह्वति–कुम्भकप्रशान्त्यार्पयन्ति । सर्वे चैते द्रव्ययज्ञात्प्रभृति ज्ञानयज्ञान्तं यज्ञस्य तत्त्वज्ञाः; तेनैव च क्षपितकल्मषाः–समूलोन्मूलितभेदवासनामयमहामोहाः ॥ ३० ॥

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥३१॥

यज्ञेन शिष्टम्–आहृतं, यज्ञाच्च–निजकरणतर्पणरूपात् अव-

शिष्टं-स्वात्मविश्रान्तिरूपं परानन्दनिरानन्दात्मकममृतं भुञ्जाना अपि यथेच्छं संसृज्यन्ते ब्रह्मतयेति तदुपरम्यतेऽतिरहस्यस्फुटप्रकटनवाचालतायाः । अत्र च बहुतरो रहस्यरसोऽन्तः संलीनीकृतोऽपि निबिडतरभक्तिसेवासंप्रसादितगुरुचरणप्राप्तसंप्रदायमहौषधसमीकृतधातूनां चर्वणादिविषयतां भूतार्थास्वादहेतुतां च प्रतिपद्यते । अत्र च व्याख्यान्तराणि टीकाकारैः प्रदर्शितानि । तान्यस्मद्गुरुपादनिरुक्तानि च स्वयमेव सचेतसः संप्रधार्यन्ताम् इति किमन्येन हन्त व्याख्यातृवचनदूषणाविनोदनेन । तदुपक्रान्तमेवोपक्रम्यते ॥ ३१ ॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥३२॥

सर्वे चैते यज्ञाः ब्रह्मणो मुखे-द्वारे उपायत्वे कथिताः । तेषु कर्मणामनुगमोऽस्ति । एवं ज्ञात्वा त्वमपि बन्धनात् मोक्षमेष्यसि ।३२।

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥

अत्र त्वयं विशेषः ;-द्रव्ययज्ञात्केवलाज्ज्ञानदीपितो यज्ञः श्रेष्ठः । केवलता च मयटा सूचिता । यतः सर्वं कर्म ज्ञाने निष्ठामेति ॥ ३६ ॥

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥

तच्च-ज्ञानं प्रणिपातेन-भक्त्या, परिप्रश्नेन-ऊहापोहतर्कवितर्कादिभिः सेवया -अभ्यासेन जानीहि । यत एवंभूतस्य तव ज्ञानिनो-निजा एव संवित्तिविशेषानुगृहीता इन्द्रियविशेषाः,

तत्त्वम् उप–समीपे देक्ष्यन्ति–प्रापयिष्यन्ति । तथाहि ते तत्त्व-मेव दर्शयन्तीति तत्त्वदर्शिनः । उक्तं हि

'योग एव योगस्योपायः'। 'ऋतम्भरा तत्र प्रज्ञा' ॥ ( यो सू० १, ४८ )

इति । अन्ये ज्ञानिनः पुरुषाः, –इति व्याख्यायमाने, भगवा-न्स्वयमुपदिष्टवांस्तदसत्यम्–इत्युक्तं स्यात् । एवमभिधाने च प्रयोज-नमन्येऽपि लोकाः प्रणिपातादिना ज्ञानिभ्यो ज्ञानं गृह्णीयुर्न यथा-कथञ्चिदिति समयप्रतिपादनम् ॥ ३४ ॥

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥**

आत्मनि मयि–मत्स्वरूपतां प्राप्ते, आत्मनि–इति सामानाधि-करण्यम् । अथोशब्दः पादपूरणे । आत्मन ईश्वरस्य साम्ये कोऽपि विशेष उक्तः । असाम्ये विकल्पानुपपत्तिः ॥ ३५ ॥

'सर्वं कर्माखिलम्'–इति यदुक्तं तत्स्फुटयितुं प्रथमश्लोकेनाध-र्मोऽपि नश्यति–इति वदन् 'सर्वं कर्म'–इति द्वितीयेन संस्कार-लेशोऽपि नावतिष्ठते–इति सूचयन् 'अखिलम्'–इति व्याचष्टे 'अपि चेत्'–इत्यादि 'संशयात्मनः';–इत्यन्तम्—

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ ३६ ॥**
**यथैधांसि समिद्धोऽग्निर्भस्मसात्क्रियतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥**
**नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥३८॥**

श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४०॥

समिद्धोऽभ्यासजातप्रतिपत्तिदार्ढ्यबन्धेन ज्ञानाग्निर्भवति यथा तथा प्रयतनीयमिति । पवित्रं हि ज्ञानसमं नास्ति । अन्यस्य संवृध्या[1] पवित्रत्वं न वस्तुत इत्यतिप्रसङ्गभयान्न प्रतायते । पवित्रतां चास्य स्वयं ज्ञास्यति सुप्रबुद्धतायाम् । अत्र च श्रद्धागमस्तत्परव्यापारत्वं झगित्येव आस्तिकत्वादसंशयत्वे सति उत्पद्यते । तस्मादसंशयवता गुर्वागमादृते न भाव्यं–संशयस्य सर्वनाशकत्वात् । ससंशयो हि न किंचिज्जानाति,–अश्रद्दधानत्वात् । तस्मात् निःसंशयेन भाव्यमिति वाक्यार्थः ॥ ४० ॥

सकलाध्यायविस्फारितोऽर्थः श्लोकद्वयेन संक्षिप्यते—

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४१ ॥

योगेनैव कर्मणां संन्यास उपपद्यते नान्यथा, इति विचारितं, विचारयिष्यते च ॥ ४१ ॥

यत एवम्

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैवं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

---

1 संवृत्त्येत्यपि पाठः

संशयं छित्वा योगं–कर्मकौशलमातिष्ठ उक्तक्रमेण । ततश्च उत्तिष्ठ–त्वं स्वव्यापारं कर्तव्यतामात्रेण कुरु, इति शिवम् ॥ ४२ ॥

अत्र संग्रहश्लोकः

विधत्ते कर्म यत्किञ्चिदच्छामात्रपूर्वकम् ।
तेनैव शुभभाजः स्युस्तृप्ताः करणदेवताः ॥ ४ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे चतुर्थोऽध्यायः ॥ ४ ॥

---

अथ

# पञ्चमोऽध्यायः

अर्जुन उवाच

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकस्तन्मे ब्रूहि विनिश्चितम् ॥ १ ॥**

संन्यासः प्रधानं, पुनर्योग इति ससंशयस्य प्रश्नः ॥ १ ॥

श्रीभगवानुवाच

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥**

संन्यासः कर्म च–नात्रैकोऽभिहितः, अपितु उभौ संमिलितौ निःश्रेयसं दत्तः । योगेन विना संन्यासो न संभवतीति योगस्य विशेषः ॥ २ ॥

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**

निर्द्वन्द्वो हि महाबाहो सुखं बन्धाद्विमुच्यते ॥ ३॥

अतश्च स एव सार्वकालिकः संन्यासी येन मनसोऽभिलाषप्रद्वेषौ संन्यस्तौ, यतोऽस्य द्वन्द्वेभ्यः—क्रोधमोहादिभ्यो निष्क्रान्ता धीः । स सुखं मुच्यत एव ॥ ३ ॥

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥
यत्सांख्यैः प्राप्यते स्थानं तद्योगैरनुगम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ।५।

इदं सांख्यम्, अयं च योगः—इति न भेदः । एतौ हि नित्यसंबद्धौ । ज्ञानं न योगेन बिना । योगोऽपि न तेन विनेति । अत एकत्वमनयोः ॥ ५ ॥

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥

तुशब्दोऽवधारणे भिन्नक्रमः । योगरहितस्य संन्यासमाप्तुं दुःखमेव,—प्राङ्नीत्या कर्मणां दुःसंन्यासत्वात् । योगिभिस्तु सुलभमेवैतत्—इत्युक्तं प्राक् ॥ ६ ॥

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

सर्वभूतानामात्मभूत आत्मा यस्य, स सर्वमपि कुर्वाणो न लिप्यते—करणप्रतिषेधारूढत्वात् ॥ ७ ॥

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।

पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्श्वसन्स्वपन् ॥८॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥

अत एव दर्शनादीनि कुर्वन्नपि असावेवं धारयति—प्रतिपत्तिदार्ढ्येन निश्चिनुते—चक्षुरादीनामिन्द्रियाणां यदि स्वविषयेषु प्रवृत्तिः, मम किमायातम्, नह्यन्यकृतेन परस्य लेपः—इति । तदेव ब्रह्मणि कर्मणां समर्पणम् । अत्र चिह्नमस्य गतसंगता । अतो न लिप्यते ॥ १० ॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मसिद्धये ॥ ११ ॥

योगिनश्च केवलैः—सङ्गरहितैः परस्परानपेक्षिभिश्च कायादिभिः कुर्वन्ति कर्माणि सङ्गाभावात् ॥ ११ ॥

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥

नैष्ठिकीम्—अपुनरावर्तिनीम् ॥ १२ ॥

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देहे नैव कुर्वन्न कारयन् ॥ १३ ॥

यथा वेश्मान्तर्गतस्य पुंसो न गृहगतैर्जीर्णत्वादिभिर्योगः; एवं मम

चक्षुरादिच्छिद्रगवाक्षनवकालङ्कृतदेहगेहगतस्य न तद्धर्मयोगः ॥१३॥

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥

एष आत्मा न किंचित्कस्यचित्करोति । प्रवृत्तिस्त्वस्य स्वभावमात्रं न फलेप्सया । तथाहि । संवेदनात्मनो भगवतः प्रकाशानन्दस्वातन्त्र्यपरमार्थस्वभावस्य स्वभावमात्राक्षिप्तसमस्तसृष्टिस्थितिसंहृतिप्रबन्धस्य स्वस्वभावान्न मनागप्यपायो जातुचित् । इति न कर्त्रवस्थातिरिक्तं कर्तृत्वं किंचित् । तदभावात्कानि कर्माणि, तदसत्त्वे कस्य फलम्, को वा कर्मफलसंबन्धः । कर्मात्र क्रिया । कर्मफलमपि च क्रियाफलमेव । तथाहि । दण्डचक्रपरिवर्तनादिक्रिया नान्या । न च सा घटनिष्पादिता—संविदन्तर्वर्तित्वात् । तस्माच्चेतनः स्वतन्त्रः परमेश्वर एव तथा तथा भाति ; इति न तद्व्यतिरिक्तं क्रियातत्फलादिकमिति सिद्धान्तः ॥ १४ ॥

अत एव क्रियातत्फलयोरभावे विधिफलस्यापि नादृष्टकृतता काचित्,-इत्यर्धेनाभिधायार्धान्तरेण संसारिणः प्रति तत्समर्थनं कर्तुमाह

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥

पापादीनि नैतत्कृतानि । किन्तु निजेनाज्ञानेन कृतानि ; शङ्कयेवामृते विषम् ॥ १५ ॥

अत एव

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।

**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥**

ज्ञानेन तु अज्ञाने नाशिते, ज्ञानस्य स्वप्रकाशत्वं[1] स्वतः सिद्धम्; यथा आदित्यस्य तमसि नष्टे। विनिवर्तितायां हि शङ्कायाममृतममृतकार्यं स्वयमेव करोति ॥ १६ ॥

तच्च तद्गतबुद्धिमनसां त्यक्तान्यव्यापाराणां घटते—इत्याशयं प्रकटयितुमाह—

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धौतकल्मषाः ॥ १७ ॥**
**स्मरन्तोऽपि मुहुस्त्वेतत्स्पृशन्तोऽपि स्वकर्मणि ।**
**सक्ता अपि न सज्जन्ति पङ्के रविकरा इव ॥ १८ ॥**

यत एवं स्वभावस्तु प्रवर्तते इति; अतो ध्वस्ताज्ञानानामित्थं स्थितिरित्याह—

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १९ ॥**

तथा च; तेषां योगिनां ब्राह्मणे नेदृशी बुद्धिः—'अस्य शुश्रूषादिनाहं पुण्यवान्भविष्यामि'—इत्यादि। गवि न पावनीयमित्यादि। हस्तिनि नार्थादिधीः। शुनि नापवित्रापकारितादिनिश्चयः। श्वपाके च न पापापवित्रादिधिषणा। अत एव समं पश्यन्तीति; नतु व्यवहरन्ति। यदुक्तं

'चिद्धर्मा[2] सर्वदेहेषु विशेषो नास्ति कुत्रचित्।
अतश्च तन्मयं सर्वं भावयन्भवजिज्जनः'॥ (वि० भै०, १००)

---

१ स्वपरप्रकाशत्वमिति ख० पाठः २ चित्—ज्ञानं क्रिया वा धर्मो गुणो यस्य सः चिद्धर्मा—चेतन इत्यर्थः।

इति । अत्रापि भावयन्निति–ज्ञानस्यैवेयं धारोक्ता ॥ १९ ॥

तस्य चेत्थं संभावनेत्याह—

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥**

एतस्य समदर्शिनः शत्रुमित्रादिविभागोऽपि व्यवहारमात्र एव, नान्तः – ब्रह्मनिष्ठत्वात् ॥ २० ॥

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।**
**स ब्रह्मयोगयुक्तात्मा सुखमव्ययमश्नुते ॥ २१ ॥**

बाह्यस्पर्शे विषयात्मनि सक्तिर्यस्य नास्ति ॥ २१ ॥

स ह्येवं मन्यते–इत्याह

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥**

स ह्येवं भावयति–बाह्यविषयजा भोगाः सर्वे दुःखकारणरूपाः, तथाविधा अप्यनित्याः ॥ २२ ॥

**शक्नोतीहैव यः सोढुं प्राक् शरीरविमोचनात् ।**
**कामक्रोधोद्भवं वेगं स योगी स सुखी मतः ॥ २३ ॥**

न चैतद्दुःशकं,–शरीरान्तकालं यावत् क्रोधकामजो वेगः क्षणमात्रं यदि सह्यते तदा आत्यन्तिकी सुखप्राप्तिः ॥ २३ ॥

**अन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।**
**स पार्थ परमं योगं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥**

अतस्तस्यान्तरेव बाह्यानपेक्षि सुखम्, तत्रैव रमते । तत्र चास्य प्रकाशः । व्यवहारे तु मूढत्वमिव । उक्तं च;–‘जड इव विच-

रेदवादमतिः' (प० सा०, ७१ ) इति ॥ २४ ॥

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥

एतच्च तैः प्राप्यं, येषां भेदसंशयरूपौ ग्रन्थी विनष्टौ ॥ २५ ॥

कामक्रोधविमुक्तानां यतीनां यतचेतसाम् ।
सर्वतो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥

तेषां सर्वतः-सर्वास्ववस्थासु ब्रह्मसत्ता पारमार्थिकी न निरोधकालमपेक्षते ॥ २६ ॥

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥२७॥

बाह्यस्पर्शान् बहिःकृत्वा-अनङ्गीकृत्य, भ्रुवोः-वामदक्षिणदृष्ट्योः क्रोधरागात्मिकयोरन्तरे-तद्रहितस्थानविशेषे चक्षुरुपलक्षितानि सर्वेन्द्रियाणि विधाय, प्राणापानौ-धर्माधर्मौ चित्तवृत्त्यभ्यन्तरे साम्येनावस्थाप्य, नसते-कौटिल्येनासाम्येन क्रोधादिवशाद्व्यवहरति-इति नासा चित्तवृत्तिः । एतदेव बाह्ये ॥ २७ ॥

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥

एवंविधो योगी सर्वव्यवहारान् वर्तयन्नपि मुक्त एव ॥ २८ ॥

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥२९॥

यज्ञफलेषु भोक्ता–त्यक्तफल[1]त्वात् । एवं तपःसु । ईदृशं भगवत्तत्त्वं विदन् यथातथास्थितोऽपि मुच्यत इति शिवम् ॥ २६ ॥

अत्र संग्रहश्लोकः

सर्वाण्येवात्र भूतानि समत्वेनानुपश्यतः ।
ज[2]डवद्व्यवहारोऽपि मोक्षायैवावकल्पते ॥ ५ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ

# षष्ठोऽध्यायः

श्रीभगवानुवाच

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥
यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
नह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥

एवं प्राक्तनेनाध्यायगणेन साधितोऽर्थः श्लोकद्वयेन निगद्यते । कार्यं–स्वजात्यादिविहितम् । 'संन्यासी' इति 'योगी' इति च पर्यायावेतौ । अत एवाह यं संन्यासमिति । तथा च–योगम-

---

1 भोक्तात्यन्तफलत्वादिति ख॰ पाठः 2 जनवदिति घ॰ पाठः ।

न्तरेण संन्यासो नोपपद्यते, एवं संकल्पसंन्यासं विना योगो न युज्यते । तस्मात्सततसंबद्धौ[1] योगसंन्यासौ । न निरग्निरित्यादिना-यमर्थो ध्वन्यते—निरग्निश्च न भवति, निष्क्रियश्च न भवति, अथ च संन्यासी—इत्यद्भुतम् ॥ २ ॥

यद्यपि 'छत्रमासिंहासनं राज्यम्' इति युक्त्या च केवलस्य निष्क्रियस्य संन्यासित्वमुपपद्यते इत्युक्तम्, तथापि

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

मुनेः—ज्ञानवतः, कर्म—करणीयं, कारणं—प्रापकः । शमः—प्राप्तभूमावनुपरमः । कारणमत्र लक्षणम् ॥ ३ ॥

एष एवार्थः प्रकाश्यते—

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जति ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

इन्द्रियार्थाः—विषयाः । तदर्थानि च कर्माणि—विषयार्जनादीनि ॥ ४ ॥

अस्यां च बुद्धाववश्यमेवावधेयमित्याह—

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥

अत्र च नान्य उपाय अपितु आत्मैव—मन एवेत्यर्थः ॥ ५ ॥

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।

---

1 संबन्धौ इति ग० पाठः

अजितात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

जितं हि मनो मित्रं घोरतरसंसारोद्धरणं करोति । अजितं तु तीव्रनिरयपातनाच्छत्रुत्वं कुरुते ॥ ६ ॥

तत्र जितमनस इदं रूपम्—

जितात्मनः प्रशान्तस्य परात्मसु समा मतिः ।
शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥ ७ ॥

प्रशान्तः-निरहंकारः । परेष्वात्मनि च शीतोष्णादिषु च अभेदधीः-न रागद्वेषौ ॥ ७ ॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥

ज्ञानम्-अभ्रान्ता बुद्धिः । विविधं ज्ञानं यत्र तद्विज्ञानं-प्राग्युक्त्युदितं कर्म ॥ ८ ॥

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

सुहृत्-यस्याकारणमेव शोभनं हृदयम् । मित्रत्वम् अन्योन्यम् । अरित्वं-परस्परम् । उदासीनः-एतदुभयरहितः[1] । मध्यस्थः-केनचिदंशेन मित्रं केनचिच्छत्रुः । द्वेषार्हो द्वेष्टुमशक्यो द्वेष्यः । बन्धुः-योन्यादिसंबन्धेन । एतेषु सर्वेषु समधीः । एवं साधुषु पापेषु च । स च विशिष्यते-क्रमात्क्रमं संसारात्तरति ॥ ९ ॥

---

१ एतद्द्वयरहित इति ख॰ पाठः

ईदृशैश्च वन्द्यचरणैः—

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।**

**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥१०॥**

इहैव—सत्यपि शरीरसंबन्धे सर्गो जितः—साम्यावस्थत्वात् । संसारस्य ह्यबन्धकत्वमेषाम् । साम्ये हि ते प्रतिष्ठिताः । साम्यं च ब्रह्म ॥ १० ॥

ननु जितात्मनः—इत्युक्तं, तत्कथं तज्जयः ? इत्याशङ्कय आरुरुक्षोः कश्चिदुपायः कायसमत्वादिकश्चित्तसंयम उपदिश्यते

**योगी युञ्जीत सततमात्मानं रहसि स्थितः ।**

**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ ११ ॥**

आत्मानं चित्तं च युञ्जीत—एकाग्रीकुर्यात् । सततमिति—न परिमितं कालम् । एकाकित्वादिषु सत्सु एतद्युज्यते नान्यथा । ११ ।

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**

**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ १२ ॥**

**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**

**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १३ ॥**

आसनस्थैर्यात्कालस्थैर्ये चित्तस्थैर्यम् । चित्तक्रियाः—संकल्पात्मानः, अन्याश्चेन्द्रियक्रिया येन यताः—नियमं नीताः ॥ १३ ॥

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**

**संपश्यन्नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १४ ॥**

---

१ जीवन्मुक्तिरेषामिति क० पाठः २ इत्युपदिश्यते इति घ० पाठः

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १५ ॥

धारयन्-यत्नेन । नासाग्रस्यावलोकने दिशामनवलोकनम् । मत्परमतया युक्त आसीतेत्यर्थः ॥ १५ ॥

युञ्जन्नेवं सदात्मानं मद्भक्तोऽनन्यमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १६ ॥

एवमात्मानं युञ्जतः-समादधतः शान्तिर्जायते । यस्यां संस्था-पर्यन्तकाष्ठा मत्प्राप्तियोगोऽस्तीति ॥ १६ ॥

योगोऽस्ति नैवात्यश्नतो न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य नातिजागरतोऽर्जुन ॥ १७ ॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १८ ॥

आहारेषु-आह्रियमाणेषु विषयेषु । विहारः-उपभोगाय प्रवृत्तिः । तस्याश्च युक्तत्वं-नात्यन्तासक्तिः नात्यन्तपरिवर्जनम् । एवं सर्वत्र । शिष्टं स्पष्टम् । जागरतः-इत्यादि मुनेः प्रमाणत्वाद्वेदवत् । एवमन्यत्रापि ॥ १८ ॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१९॥

अस्य च योगिनश्चिह्नम्, आत्मन्येव नियतमनाः न किञ्चिदपि स्पृहयते ॥ १९ ॥

---

१ अद्वैतनिष्ठत्वात् त्रासरहितः　२ उपयोगाय प्रवृत्तिरिति घ० पाठः

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनि ॥ २० ॥

यथा निवातस्थो दीपो न चलति, एवं योगी। चलनमस्य विषयादीनामर्जनादयः प्रयासाः ॥ २० ॥

इदानीं तस्य स्वस्वभावस्य ब्रह्मणो बहुतरविशेषणद्वारेण स्वरूपं निरूप्यते, तीर्थान्तरकल्पितेभ्यश्च रूपेभ्यो व्यतिरेकः—

यत्रोपरमते चित्तं निरुद्धं योगसेवनात्।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २१ ॥
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २२ ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥२३॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २४ ॥

यत्र मनो निरुद्धमुपरमते स्वयमेव, आत्यन्तिकं–विषयकृतकालुष्याभावात् सुखं यत्र वेत्ति। अपरो लाभो–धनदारपुत्रादीनाम्। सन्निधेयोगलब्धश्च योगः। अन्यत्र सुखधीर्निवर्तते चेति वस्तुस्वभावोऽयमित्यर्थः। न विचाल्यते–विशेषेण न चाल्यते ; अपि तु संस्कारमात्रेणैवास्य प्रथमक्षणमात्रमेव चलनं करुणादिवशात्, नतु मूढतया, 'विनष्टो वताहं, किं मया प्रतिपत्तव्यम्!' इत्यादि।

दुःखसंयोगस्य वियोगो यतः । स च निश्चयेन—आस्तिकताजनितया श्रद्धया सर्वथा योक्तव्यः—अभ्यसनीयः । अनिर्विण्णम्—उपेयप्राप्तौ दृढतरं, संसारं दुःखबहुलं प्रति निर्विण्णं वा चेतो यस्य ॥ २४ ॥

कामानां त्यागे उपायः सङ्कल्पत्याग इत्याह—

**सङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २५ ॥**
**शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥२६॥**

मनसैव—न व्यापारोपरमेण । धृतिं गृहीत्वा क्रमात्क्रममभिलाषदुःखं प्रतनूकृत्य । किंचिदपि—विषयाणां त्यागग्रहणादिकं न चिन्तयेत् । यत्त्वन्यैर्व्याख्यातं न किंचिदपि चिन्तयेत्—इति, तदस्मभ्यं न रुचितं,—शून्यवादप्रसङ्गात्[1] ॥ २६ ॥

न च विषयव्युपरममात्रमेव प्राप्यमित्युच्यते—

**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव शमं नयेत् ॥ २७ ॥**

यतो यतो मनो निवर्तते, तन्निवर्तनसमनन्तरमेव आत्मनि

---

१ अथवा—नेति नेति हि वीप्सया सर्वनिषेधस्वभावत्वादेव बृहत्त्वेनाभावमेव ब्रह्म मन्यन्ते केचन । न किंचिदपि चिन्तयेदिति ह्यत्र सकलाचिन्त्यविविक्ततैव तावदात्मतत्त्वमित्युपपादितम् अधरभूमिकापरित्यागं तावदाद्रियन्ताम्—इत्याशयेन, नतु तदेव परं तत्त्वम् । इदमेव दर्शयितुं श्रीस्पन्दे—'नाभावो भाव्यतामेति' इत्यादिना, 'अभावं भावयेत्तावद्यावत्तन्मयतां व्रजेत्' इत्यभावब्रह्मवादिमतं दूषितम् ।

शमयेत्। अन्यथा अप्रतिष्ठं चित्तं पुनरपि विषयानेवावलम्बते ॥२७॥

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २८ ॥**

तत्रात्मनि शान्तचित्तं योगिनं–कर्मभूतं, सुखं कर्तृभूतमुपैति ।२८।

**युञ्जन्नेवं सदात्मानं योगी नियतमानसः।**
**सुखेन ब्रह्मसंयोगमत्यन्तमधिगच्छति ॥ २९ ॥**

अनेनैव क्रमेण योगिनां सुखेन ब्रह्मावाप्तिः; नतु कष्टयोगादिनेति तात्पर्यम् ॥ २९ ॥

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ ३० ॥**

सर्वेषु भूतेषु आत्मानं–ग्राहकरूपतयानुप्रविशन्तं भावयेत्। आत्मनि च ग्राह्यताज्ञानद्वारेण सर्वाणि भूतानि एकीकुर्यात्। अतश्च समदर्शनत्वं जायते योगश्चेति संक्षेपार्थः। विस्तरस्तु भेदवादविदारणादिप्रकरणे देवीस्तोत्रविवरणे च मयैव निर्णीतः, इति तत एवावधार्यः ॥ ३० ॥

**यो[1] मां पश्यति सर्वत्र सर्वं च मयि पश्यति।**

---

१ माम्–अहंरूपमनन्यापेक्षप्रकाशमनन्यविमर्शमयं स्वप्रकाशविमर्शं प्रकाशं सर्वत्र–सर्वोपश्लेषेण यः पश्यति; नीलमिति हि प्रकाशमाने नीलं प्रकाशते इतीयदहंप्रकाशः, इति प्रकाश एव प्रकाशितो भवति, प्रकाशं च सर्वत्र यः पश्यति; न प्रकाशस्य देशे काले स्वरूपे वा खण्डनात्मा व्यवच्छेदोऽस्तीति, मयीति–आत्मसंवेदनप्रकाशे च तदविनिर्भक्तं सर्वं प्रकाशितं भवतीति। तथा नीलादिकमात्मप्रकाशभित्तौ रूढं चकास्तीति यः पश्यति, तस्याहमिति प्रकाशो न प्रणश्यति–न खण्डनानिकारं प्राप्नोति, न प्रकाशरूपाच्च्यवते,*

**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥३०*॥**

प्रणाशः—अकार्यकारित्वात् । तथाहि । परमात्मनः सर्वगतं रूपं यो न पश्यति, तस्य परमात्मा पलायितः—स्वरूपप्रकटीकाराभावात् । यश्चेदं वस्तुजातं तद्भासनात्मनि परमात्मनि विनिविष्टं भवति, तथाविधं यो न पश्यति, स परमार्थस्वरूपात् प्रनष्टः—तद्व्यतिरेके सत्यनिर्भासात् । यस्तु सर्वगतं मां पश्यति, तस्याहं न प्रनष्टः—स्वस्वरूपेण भासनात् । भावांश्च मयि पश्यति, तत्तेषां भासनोपपत्तौ द्रष्टृतायां परिपूर्णायां स न प्रनष्टः परमात्मनः ॥ ३१ ॥

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३२ ॥**

यस्त्वेवं ज्ञानाविष्टः सोऽवश्यमेवैकतया भगवन्तं सर्वगतं विदन् सर्वावस्थागतोऽपि न लिप्यते ॥ ३२ ॥

**आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।**
**सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३३ ॥**

सर्वस्य च सुखदुःखे आत्मतुल्यतया पश्यति, इति स्वरूपमेतदनूदितम् न पुनरेषोऽपूर्वो विधिः ॥ ३३ ॥

अर्जुन उवाच

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**

---

* अहं च तस्य विश्वेश्वररूप एवात्मा न प्रणश्यामि—नाच्छादितो भवामि । तथा सोऽपि—एवंद्रष्टा ममेति—शुद्धप्रकाशात्मनः परमेश्वरस्य न प्रणश्यति—आच्छादितो न भवतीति रहस्यार्थं आचार्यपादैर्विवृत्तिविमर्शिन्यां विवृतः ।

**एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं पराम्[1] ॥३४॥**

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।**

**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३५ ॥**

योऽयमिति—परोक्षप्रत्यक्षवाचकाभ्यामेवं सूच्यते । भगवदभिहितानन्तरोपायपरम्परया स्फुटमपि—प्रत्यक्षानिर्दिष्टमपि ब्रह्म, मनसश्चाञ्चल्यदौरात्म्यात्सुदूरे वर्तते, इति परोक्षायमाणम् । प्रमथ्नाति दृष्टादृष्टे । बलवत्—शक्तम् । दृढं—दुष्टव्यापारात् वारयितुमशक्यम् ॥ ३५ ॥

अत्रोत्तरं— श्रीभगवानुवाच

**असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।**

**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३६ ॥**

वैराग्येण विषयोत्सुकता विनाश्यते । अभ्यासेन मोक्षपक्षः क्रमात्क्रमं विषयीक्रियते इति द्वयोरुपादानम् । उक्तं च तत्रभवता भाष्यकृता

'उभयाधीनश्चित्तवृत्तिनिरोधः'। (यो०,द० १, १२)

इति ॥ ३६ ॥

**असंयतात्मनो योगो दुष्प्राप इति मे मतिः ।**

**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः[2] ॥ ३७ ॥**

अत एषा प्रतिज्ञा—असंयतात्मनः—अविरक्तस्य न कथंचिद्योगावाप्तिः । वश्यात्मनेति—वैराग्यवता । यतमानेनेति—साभ्यासेन । उपायान्—अनेकसिद्धान्तादिशास्त्रविहितान् संश्रित्य ॥ ३७ ॥

---

१ स्थिरामिति ग० पाठः २ ल्यब्लोपे पञ्चमी

अर्जुन उवाच

अयतः श्रद्धयोपेतो योगाच्चलितमानसः ।
लिप्समानः सतां मार्गं प्रमूढो ब्रह्मणः पथि ॥ ३८ ॥
अनेकचित्तो[1] विभ्रान्तो[2] मोहस्यैव वशं गतः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३९ ॥

प्राप्ताद्योगात् यदि चलितेऽपि चित्ते श्रद्धा न हीयते, विनष्टश्रद्धो हि सिद्धयोगोऽपि सर्वं निष्फलं कुरुते । उक्तं हि

'यदा प्राप्यापि विज्ञानं दूषितं चित्तविभ्रमात् ।
तदैव ध्वंसते शीघ्रं तूलराशिरिवानलात्' इति ॥ ३९ ॥

कच्चिन्नोभयविभ्रंशाच्छिन्नाभ्रमिव[3] नश्यति ।
अप्रतिष्ठो महाबाहो विनाशं वाधिगच्छति ॥ ४० ॥
एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य च्छेत्ता नह्युपपद्यते ॥ ४१ ॥

योगस्य सम्यक् सिद्धावजातायां किं लोकान्निष्क्रान्तः सम्यक् च ब्रह्मणि न लीनः, इति नश्येत्; अथवा ब्रह्मण्यप्रतिष्ठत्वाद्विनश्यति परलोकबाधाय, इति प्रश्नः ॥ ४१ ॥

अत्र निर्णयं—　　श्रीभगवानुवाच

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४२ ॥

---

१ प्रतिक्षणं चञ्चलत्वाद्बहुविधमनोवृत्तिः　२ अविश्रान्त इति क॰ पाठः
३ पवनविशीर्णो जलदो यथा विनश्यति तद्वत्

न तस्य योगभ्रष्टस्येह लोके परलोके वा नाशोऽस्ति–अनष्ट-श्रद्धत्वादिति भावः । तस्य–लोकद्वयाविनाशिनः । स हि कल्याणं भगवन्मार्गलक्षणं कृतवान् । न च तदग्निष्टोमादिवत्क्षयि ॥ ४२ ॥

**प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४३ ॥**

शाश्वतस्य–विष्णोः समाः–वैष्णवानि त्रीणि वर्षाणि । शुचीनामिति–येषां भगवदंशस्पर्शि चित्तम् ॥ ४३ ॥

**अथवा योगिनामेव जायते धीमतां कुले ।**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४४ ॥**

यदि तु तारतम्येनास्यापवर्गेण भवितव्यं तदा योगिकुल एव जायते । अत एवाह–'एतद्धि दुर्लभतरम्'–इति । श्रीमतां गेहे किलावश्यमेव विघ्नाः सन्ति संसिद्धौ मोक्षात्मिकायाम् ॥ ४४ ॥

**तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम् ।**
**ततो भूयोऽपि यतते संसिद्धौ कुरुनन्दन ॥ ४५ ॥**
**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सन् ।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४६ ॥**

अवशः–परतन्त्र एव किल तेन–पूर्वाभ्यासेन बलादेव योगाभ्यासं प्रति नीयते । न चैतत् सामान्यं, योगजिज्ञासामात्रेणैव हि शब्दब्रह्मातिवृत्तिः, मन्त्रस्वाध्यायादिरूपं च शब्दब्रह्म अतिवर्तते–न स्वीकुरुते ॥ ४६ ॥

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।**

**अनेकजन्मसंसिद्धस्ततो याति[1] परां गतिम् ॥ ४७ ॥**

ततो–जिज्ञासानन्तरम् यत्नवान्–अभ्यासक्रमेण देहान्ते वासुदेवत्वं प्राप्नोति । न चासौ तेनैव देहेन सिद्ध इति मन्तव्यम्; अपितु बहूनि जन्मानि तेन तदभ्यस्तमिति मन्तव्यम् । अत एव यस्यानन्यव्यापारतया भगवद्व्यापारानुरागित्वं स योगभ्रष्ट इति निश्चयम् ॥ ४७ ॥

योगस्य प्राधान्यमाह—

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।**
**कर्मिभ्यश्चाधिको योगी[2] तस्माद्योगी भवार्जुन ॥४८॥**

तपस्विभ्योऽधिकत्वं पूर्वमेव सूचितम् । ज्ञानिभ्योऽधिकत्वं–ज्ञानस्य योगफलत्वात् । कर्मिभ्य उत्कर्षः–स एव कर्माणि कर्तुं वेत्ति ॥ ४८ ॥

न च निरीश्वरं कष्टयोगमात्रं संसिद्धिदमित्युच्यते—

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥४९॥**

सर्वयोगिमध्ये य एव मामन्तःकरणे निवेश्य भक्तिश्रद्धातत्परो गुरुचरणसेवालब्धसंप्रदायक्रमेण मामेव–नान्यत् भजते–विमृश्यते स युक्ततमः–परमेश्वरसमाविष्टः; इति सेश्वरस्य ज्ञानस्य सर्वप्राधान्यमुक्तमिति शिवम् ॥ ४९ ॥

---

१ परमात्मसमापत्तिलक्षणां प्रकृष्टां भूमिं प्राप्नोति २ नित्यनिरुत्तरानन्दमयसमाधिमानित्यर्थः ।

अत्र संग्रहश्लोकः

भगवन्नामसंप्राप्तिमात्रात्सर्वमवाप्यते ।
फलिताः शालयः सम्यग्वृष्टिमात्रेऽवलोकिते ॥६॥

---

इति श्रीमहामहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते
श्रीमद्भगवद्गीतार्थसंग्रहे षष्ठोऽध्यायः ॥ ६ ॥

---

अथ

# सप्तमोऽध्यायः

श्रीभगवानुवाच

**मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रितः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥**

**ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा न पुनः किंचिज्ज्ञातव्यमवशिष्यते ॥ २ ॥**

ज्ञानविज्ञाने ज्ञानक्रिये एव । ततो न किंचिदवशिष्यते ;– सर्वस्य ज्ञेयस्य ज्ञानक्रियानिष्ठत्वात् ॥ २ ॥

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥**

अस्य च वस्तुनः सर्वो न योग्यः । इत्यनेन दुर्लभत्वात् यत्नसेव्यतामाह ॥ ३ ॥

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**

---

१ यदुक्तं

" पूजकाः शतशः सन्ति भक्ताः सन्ति सहस्रशः ।
प्रसादपात्रमाश्वस्ताः प्रभोर्द्वित्रा न पञ्चषाः " इति

अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

इयमिति—प्रत्यक्षेण या संसारावस्थायां सर्वजनपरिदृश्यमाना। सा चैकैव सती प्रकाराष्टकेन भिद्यते इति एकप्रकृत्यारब्धत्वादेकमेव विश्वमिति प्रकृतिवादेऽप्यद्वैतं प्रदर्शितम् । सैव जीवत्वं—पुरुषत्वं प्राप्ता परा ममैव नान्यस्य च । सोभयरूपा वेद्यवेदकात्मकप्रपञ्चोपरचनविचित्रा । तत एव स्वात्मविमलमुकुरतलकलितसकलभावभूमिः स्वस्वभावात्मिका सततमव्यभिचारिणी प्रकृतिः । इदं जगत्—भूम्यादि ॥ ५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

उपधारय—अभ्यासाहितानुभवक्रमेणात्मसमीपे कुरु । एवं च त्वमेवोपधारय—यदहं वासुदेवीभूतः सर्वस्य प्रभवः प्रलयश्च । अहम्—इत्यनेन प्रकृतिपुरुषपुरुषोत्तमेभ्योऽव्यतिरिक्तोऽपीश्वरः सर्वथा सर्वानुगतत्वेन स्थित इति सांख्ययोगयोर्नास्ति भेदवादः—इति प्रदर्शितम् ।६

मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥

सूत्रे मणिगणा इव— यथा तन्तुरनवध्रियमाणरूपोऽप्यन्तर्लीनतया स्थितः; एवमहं सर्वत्र ॥ ७ ॥

रसोऽहमप्सु कौन्तेय प्रकाशः शशिसूर्ययोः ।

**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥**

अप्स्विति—सर्वत्रास्वाद्यमानो योऽनुद्भिन्नमधुरादिविभागः सामान्यः सोऽहम् । एवं प्रकाशः—मृदुत्वचण्डत्वादिरहितः । खे—आकाशे यः शब्द इति सर्वस्यैव शब्दस्य नभोगुणत्वादत्रावधारणम् यः केवलं गगनगुणतया ध्वनिः संयोगविभागादिसामग्र्यन्तररहितोऽवहितहृदयैर्ब्रह्मगुहागहनगामी योगिगणैः संवेद्योऽनाहताख्यः सकलश्रुतिग्रामानुगामी, तद्भगवतस्तत्त्वम् । पौरुषं—येन तेजसा पुरुषोऽहमिति सार्वभौमं प्रतिपद्यते ॥ ८ ॥

**पुण्यः पृथिव्यां गन्धोऽस्मि तेजश्चास्मि विभावसौ ।**

**जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥**

यो धरायां केवलधर्मतया गन्धगुणः स स्वभावपुण्यः, पूत्युत्कटादीनि तु भूतान्तरसंबन्धात् । उक्तं च

'इष्टं भूमिगुणाधिक्याद्दुर्गन्ध्यग्निगुणोदयात् ।

जडमम्बुगुणौदार्यात् ..................... ॥'

इत्यादि ॥ ९ ॥

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।**

**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥**

**बलं बलवतामस्मि कामरागविवर्जितम् ।**

**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥**

बीजं—सूक्ष्ममादिकारणम् । कामरागविवर्जितं बलं—सकलवस्तुधारणसमर्थमूर्जोरूपम् । कामः—इच्छा संविन्मात्ररूपा यस्या घटपटादिभिधर्मरूपैर्नास्ति विरोधः । इच्छा हि सर्वत्र भगवच्छक्ति-

यानुयायिनी न क्वचिद्विरुध्यते, धर्मैस्तु-आगन्तुकैर्घटपटादिभिर्भिद्यते, इति तदुपासकतया शुद्धसंवित्स्वभावत्वं ज्ञानिनः। उक्तं च शिवोपनिषदि—

'इच्छायामथवा ज्ञाने जाते चित्तं निवेशयेत्।' (वि० भै०, १८)

इति। जात एव; नतु बाह्यप्रसृते इत्यर्थः। एवं व्याख्यानं त्यक्त्वा ये 'परस्परानुपघातकं त्रिवर्गं सेवेत'-इत्याशयेन व्याचक्षते, ते संप्रदायक्रममजानाना भगवद्रहस्यं च व्याचक्षाणा नमस्कार्या एव ॥ ११ ॥

**ये[2] चैव सात्त्विका भावा राजसास्तामसाश्च ये।**

---

१ इच्छायां जातमात्रायाम्, अथवा ज्ञाने जातमात्रे सति, विषयसंकल्पं विहाय आत्मनि चित्तं निक्षिपेदित्यर्थः।

२ 'ये चैव सात्त्विका भावाः'-इत्यनेन सर्वमिदं वेद्यरूपं वेदकरूपं च प्रकाशतदभावतदुभयसंवलनामयतया विचित्रमहमिति शुद्धस्वभावादेव संवेदनात्प्रसृतमित्यभिधाय, प्रसरस्य भेदावभासप्राधान्यादहंप्रकाशस्य च भिन्नस्वरूपदेशकालोत्तरत्वात् तत्र प्रसरे रूढो मयि न रूढो भवति; प्रसरस्य हि मद्रूपताच्छादनभाग एव प्राणः। मयि तु रूढिं विना ते न किंचन स्युरप्रकाशत्वापत्तेः, नतु तैर्विना स्वतन्त्राहंप्रकाशस्य खण्डना काचित्। संसारमोक्षाभिप्रायेणैव च सर्वब्रह्मणोः किं विधेयं, किमनुवदितव्यमिति विचारयितव्यम्। तत्र यद्यपि पूर्वसिद्धं ब्रह्म तदनूद्यापूर्वत्वेन सर्वं त्वस्य वेद्यवेदकरूपं विधेयं ब्रह्मैव सर्वं भवति नान्यत्किंचन सर्वम्, ब्रह्म किल सर्वशक्ति इति विध्यनुवादौ, तथापि परस्योपदेश्यस्य ब्रह्म न किंचित्सिद्धम् येनानूद्यते। सर्वं त्वस्य वेद्यवेदकरूपं सिद्धमिति तदनूद्यास्य ब्रह्मतादात्म्यमुच्यते। यत्सर्वमिदं दृश्यते तस्यान्तस्तमां स्वरूपमनुप्रविश्य विचार्यमाणं प्रकाशपरामर्शरूपमेवावशिष्यते। तत उक्तं 'सर्वं खल्विदं ब्रह्म' इति। तत एव सर्वभागस्य यदिदं दृश्यते नानारूपं तन्निषेधति 'नेह नानास्ति किंचन' इति। इह-दृश्यमाने सर्वशब्दस्य व्यपदेश्ये नाना-यत्प्रकाशेन सह न भवति-प्रकाशतादात्म्येन न वर्तते तत्किमपि रूपं नास्ति;-अप्रकाशमानस्य शपथैरप्यप्रत्येयत्वादित्यभिप्रायः। इति विवृतमाचार्यपादैरेव विवृतिविमर्शिन्याम्।

**मत्त एवेति तान्विद्धि नत्वहं तेषु ते मयि ॥ १२ ॥**

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥**

सत्त्वादीनि मन्मयानि नत्वहं तन्मयः । अत एव च भगवन्मयः सर्वं भगवद्भावेन संवेदयते । नतु नानाविधपदार्थविज्ञाननिष्ठो भगवत्तत्त्वं प्रतिपद्यते, इति सकलमानसावर्जक एष क्रमः । अनेनैव चाशयेन वक्ष्यते 'वासुदेवः सर्वमिति' इति ज्ञानेन यो बहुजन्मोपभोगजनितकर्मसमतासमनन्तरसमुत्पन्नपरशक्तिपातानुगृहीतान्तःकरणोऽसौ प्रतिपद्यते भगवत्तत्त्वं 'सर्वं वासुदेवः'–इति बुद्ध्या, स महात्मा, स च दुर्लभ इति । एवं ह्यबुध्यमानं प्रत्युत सत्त्वादिभिर्गुणैर्मोहितमिदं जगत् गुणातीतं वासुदेवतत्त्वं नैवोपलभते ॥ १३ ॥

कथं खलु सत्त्वादिमात्रस्थिता भगवतस्तत्त्वं न विदुः ? इत्याह

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥**

देवः–क्रीडाकरः, तत्र भवा दैवी–क्रीडा ममेयमित्यर्थः । तेन सत्त्वादीनां वस्तुतः संविन्मात्रपरब्रह्मानतिरिक्ततायामपि यत्तदतिरिक्ततावगमनं तदेव गुणत्वं–भोक्तृतत्त्वपारतन्त्र्यं भोग्यत्वम् । तच्च

---

१ अथच। एषा–परिदृश्यमाना व्यवहार्या गुणमयी दैवी गुणत्रयात्मकविश्वरूपा क्रीडा ममैव माया स्वभावः–स्वरूपमस्तीत्यन्वयः, परन्तु दुरत्यया–भेदावभासप्राणगुणत्रयरूपं चित्तत्त्वव्यतिरिक्तं जानतां प्रमातृणामनुल्लङ्घ्या । ये मदनुग्रहभाविताचित्ता एतां मायां मत्स्वभावभूतां गुणमयीं क्रीडां मामेव प्रपद्यन्ते–मामेव जानन्ति मत्स्वरूपादव्यतिरिक्तां पश्यन्ति; तेऽतितरन्ति, संसारादिति शेषः ॥

भेदात्मकं रूपं संसारिभिरनिर्वाच्यतया, तान् प्रति मायारूपम्। अतो ये परमार्थब्रह्मप्रकाशविदस्ते तदनतिरिक्तं विश्वं पश्यन्तो गुणानां—सत्त्वादीनां गुणतालक्षणां भेदावभासस्वभावां मायामतितरन्तीति मामेव—इत्येवकारस्याशयः। ये तु यथास्थितं भेदावभासमात्रं विदुस्ते मायां नातिक्रामन्ति। तद्युक्तमुक्तं 'नत्वहं तेषु'—इति ॥ १४ ॥

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।**
**माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥**

ये च मां सत्यप्याधिकारिणि काये नाद्रियन्ते, ते दुष्कृतिनो नराधमाः, मूढाः—आसुरास्तामसाः। इति मायामहिमैवायम् ॥१५॥

**चतुर्विधा[1] भजन्ते मां जनाः सुकृतिनः सदा।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥**
**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥**
**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतः।**

---

[1] दुःखनिराकरणकारणतानिश्चयेन वा, सुखसंपत्तिहेतुतानिश्चयेन वा, तदुभयविषयार्थसंशयेन वा जिज्ञासाशब्दवाच्येन, तत्त्वज्ञाननान्तरीयकतया वा परमेश्वरविषयः प्रह्वीभावो जायते। तदाह चतुर्विधा इति। मामिति—अविच्छेदेन प्रकाशमानं परमात्मानं सोपाधिं पूर्वं, चरमे निरुपाधिं भजन्ते—सेवन्ते उत्कर्षयन्ति। तेन भक्ताश्चतुर्विधास्तेषां मध्ये अन्त्यो नित्ययुक्तो—नित्यं 'मय्यावेश्य मनो ये माम्'—इत्युक्तेन समावेशयोगेन युक्तो नित्यं च भक्त्या युक्तः तत्त्वादित्रितयवत्फलप्राप्तौ विवर्तमानभक्तिः। तथा एकत्र परमेश्वरे एव भक्तिर्यस्य नतु प्राधान्येन फले, स विशिष्टतरः, इति प्रकृष्टतां निरूप्य परमेश्वरावेशरूपतया समस्तसंपन्निमित्तभावं संवादयति—'ज्ञानी त्वात्मैव मे मतः'—इति। इति विवृतिविमर्शिन्यामाचार्यपादैर्विवृतम्।

आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ।१८।

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १६ ॥

ये तु मां भजन्ते ते सुकृतिनः । ते च चत्वारः । सर्वे चैते उदाराः; यतोऽन्ये कृपणबुद्धयः, आर्तिनिवारणमर्थादि च तुल्य-पाणिपादोदरशरीरसत्त्वेभ्योऽधिकतरं वा आत्मन्यूनेभ्यो मार्गयन्ते । ज्ञान्यपेक्षया तु न्यूनसत्त्वाः । यतस्तेषां तावत्यपि भेदोऽस्ति; 'भगवत इदमहमभिलष्यामि'–इति भेदस्य स्फुटप्रतिभासात् । ज्ञानी तु मामेवाभेदतयावलम्बते इति ततोऽहमभिन्न एव। तस्य चाहमेव प्रियो नतु फलम् । अत एव स 'वासुदेव एव सर्वम्'–इत्येवं दृढप्रतिपत्तिपवित्रीकृतहृदयः ॥ १९ ॥

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान्हितान् ॥२२॥

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥

ये पुनः स्वेन स्वेनोत्तमादिकामनास्वभावेन विचित्रेण परि-

च्छिन्नमनसस्ते कामनापहृतचेतनास्तत्समुचितामेव ममैवावा-न्तरतनुं देवताविशेषमुपासते । अतो मत्त एव कामफलमुपाद-दते । किन्तु तस्य अन्तोऽस्ति ;–निजयैव वासनया परिमिती-कृतत्वात् । अत एवेन्द्रादिभावनातात्पर्येण यागादि कुर्वन्तस्तथा-विधमेव फलमुपाददते । मत्प्राप्तिपरास्तु मामेव ॥ २३ ॥

ननु सर्वगते भगवत्तत्त्वे किमिति देवतान्तरोपासकानां मितं फलम् ? उच्यते—

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥**

ते खलु अल्पबुद्धित्वात् मत्स्वरूपं पारमार्थिकमविद्यमानव्य-क्तिकं न प्रत्यभिजानते । अपितु निजकामनासमुचिताकारविशि-ष्टज्ञानस्वभावं व्यक्तिमेवापन्नं विदन्ति नान्यथा । अत एव न ना-म्नि आकारे वा कश्चिद्ग्रहः । किन्तु सिद्धान्तोऽयमत्र–यः काम-नापरिहारेण यत्किंचिद्देवतारूपमालम्बते तस्य तत् शुद्धमुक्तभावेन पर्यवस्यति । विपर्यात्तु विपर्ययः ॥ २४ ॥

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥२५॥**
**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्यन्ति च भूतानि मां तु वेद न कश्चन ॥ २६ ॥**

---

तदुक्तं परमार्थसारे—

'सर्वाकारो भगवानुपास्यते येन येन भावेन ।
तं तं भावं भूत्वा चिन्तामणिवत्समभ्येति' ॥ इति ।

सर्वेषां नाहं गोचरतां प्राप्नोमि ॥ २६ ॥

ननु च कर्माण्येव क्रियमाणानि प्रलयकाले मोक्षं विदधते । अन्यथा किमिति महाप्रलय उपजायते ? इत्याशङ्कायामारभते—

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ॥ २७ ॥

इच्छाद्वेषक्रोधमोहादिभिस्तावन्मोहात्मक एव स परं स्फीतीभावमुपनीयते । येन प्रकृतिजठरान्तर्वर्ति समग्रमेव जगत् निजकार्यकरणमात्राक्षममेव प्रसुप्ततामवलम्बते । आमोहं—वासनानुभवात्प्रतिदिनम् रात्रिसमये सौषुप्तवत् । न तु तावता विमुक्तरूपता ;—मोहानुभवसमाप्तौ पुनर्विचित्रव्यापारसंसारदर्शनात् ॥ २७ ॥

येषां त्वन्तं गतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥
जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९॥

ये तु विनष्टतामसाः पुण्यापुण्यपरिक्षयक्षेमीकृतात्मानस्ते विपाटितमहामोहबिताना: सर्वमेव भगवद्रश्मिखचितं जरामरणमयतमिस्रस्रुतं ब्रह्म विदन्ति ॥ २९ ॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

आध्यात्मिकाधिभौतिकाधिदैविकाधियज्ञिकानि च ममैव रूपान्तराणि । प्रयाणकाले च नित्यं भगवद्भावितान्तःकरणत्वान्मां

जानन्ति, यतो येषां जन्मपूर्वमेव भगवत्तत्त्वं; तेऽन्तकाले परमेश्वरं संस्मरेयुः । 'किं जन्मासेवनया'–इति ये मन्यन्ते; तेषां तूष्णींभाव एव शोभन इति शिवम् ॥ ३० ॥

अत्र संग्रहश्लोकः

स्फुटं भगवतो भक्तिराहिता कल्पमञ्जरी ।
साधकेच्छासमुचितां येनाशां परिपूरयेत् ॥ ७ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे सप्तमोऽध्यायः ॥ ७ ॥

---

अथ

## अष्टमोऽध्यायः

अर्जुन उवाच

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमाधिदैवं किमुच्यते ॥ १ ॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

'ते ब्रह्म तद्विदुः' इत्यादिना यद्भगवतोपक्षिप्तं; तत्प्रश्नवकपूर्वकं निर्णयति । अधियज्ञः कथं, कोऽत्र देहे, तिष्ठतीति शेषः ॥ २ ॥

श्रीभगवानुवाच

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।

**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥**

बृहत्वाद्बृंहकत्वाच्च परं ब्रह्म । अत एव अध्यात्मशब्दवाच्यम् । यतः स्वः—अनिवृत्तधर्मा चैतन्याख्यो भावः । तस्य च चैतन्यस्वभावस्य ब्रह्मणोऽपरिच्छिन्नबाह्यलक्षणतया क्रोडीकृतविश्वशक्तेरैश्वर्यलक्षणा-त्स्वातन्त्र्यात् बहिर्भावावभासनात्मा बहिर्भूतभावान्तरावभासनात्मा च यो विसर्गः क्रमेण भूतानां—ब्रह्मादिप्रमातॄणां भावानां—जडानाम् उद्भवकारी—जडाजडवैचित्र्यनिर्भासकः । तथा भूतभावस्य—विग-लितसकलवितथप्रपञ्चस्य सत्यत्वस्य उद्भवं करोतीति ॥ ३ ॥

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥**

क्षरति—स्रवति परिणामादिधर्मेणेति क्षरः—घटादिः पदार्थग्राम उच्यते । पुरुषः—आत्मा स चाधिदैवतम् ;—तत्र सर्वदेवतानां परिनिष्ठितत्वात् । अत एवाशेषयज्ञभोक्तृत्वेन यज्ञान्—अवश्यकार्या-णि कर्माणि अधिकृत्य यः स्थितः पुरुषोत्तमः, सोऽहमेव । अहमेव च देहे स्थित इति प्रश्नद्वयमेकेन यत्नेन निर्णीतम् ॥ ४ ॥

अथ योऽवशिष्टः प्रश्नः 'कथं प्रयाणकाले ज्ञेयोऽसि' इति ; तं निर्णयति—

**अन्तकालेऽपि मामेव स्मरन्मुक्त्वा कलेवरम् ।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥**
**यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।**
**तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥**

**तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।**
**मदर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ७ ॥**

न केवलं स्वस्थावस्थायां यावदन्तकालेऽपि, मामेवेति–व्यवच्छिन्नसकलोपाधिकम् । कथं चास्व[1]स्थावस्थायां विनिवृत्तसकलेन्द्रियचेष्टस्य भगवान् स्मृतिपथमुपेयात्;– इत्युपायमपि उपदिशति–सर्वावस्थासु व्यावहारिकीष्वपि यस्य भगवत्तत्त्वं न हृदयादपयाति, तस्य भगवत्येव सकलकर्मसंन्यासिनः सततं भगवन्मयस्यावश्यं स्वयमेव भगवत्तत्त्वं स्मृतिविषयतां यातीति । सदा तद्भावभावितत्वं चात्र हेतुः । अत एवाह–येनैव वस्तुना सदा भावितान्तःकर[2]णाः; तदेव मरणसमये स्मर्यते–तद्भाव एव च प्राप्यते, इति सर्वथा मत्परम एव मत्प्रेप्सुः स्यादित्यत्र तात्पर्यम् । ननु यदेवान्ते स्मर्यते तत्तत्त्वमेवावाप्यते–इति । एवं हि सति ज्ञानिनोऽपि यावच्छरीरभाविधातुदोषविकलितचित्तवृत्तेर्जडतां प्राप्तस्य तामसस्येव गतिः स्यात् । न चाभ्युपगमोऽत्र युक्तः–प्रमाणभूतश्रुतिविरोधात् । अस्ति हि—

‘[3]तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहम् ।
ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥’ ( प०सा०,श्लो०८३ )

---

१ अन्तावस्थायामिति घ० पाठः २ अन्तःकरणभाव इति क० पाठः । ३ एवं परिशीलितस्वरूपो योगी ‘तीर्थे’–प्रयागपुष्करकुरुक्षेत्रादौ महापुण्ये स्थाने, अथवा ‘श्वपचसदने’–अन्त्यजनगृहोपलक्षिते अतिपापीयसि शरीरं मुञ्चन्,– ‘कैवल्यं याति’–कलेवरपरित्यागात् प्रधानादिकार्यकारणवर्गेभ्योऽन्यां चिदानन्दैकघनां तुर्यातीतरूपां केवलतां यातीति यावत् । यतोऽस्य सर्वमिदं विश्वं स्वात्मना पूर्णं समदृशा परमेश्वराधिष्ठितं पश्यतो न क्षेत्राक्षेत्रप्रविभागः, अत एव हतशोकः । नापि अस्य देहपातावसरे स्मृत्युपयोगः–इत्याह ‘नष्टस्मृतिरपि’–इति ।

इति । तस्मादेवं विध्यनुवादौ । सदा येन भावितमन्तःकरणं तदेवान्ते–प्रयाणानन्तरं प्राप्यते । तच्च स्मर्यते न वा–इति नात्र निर्बन्धः । अन्वाचयश्चायमपिशब्देन सूचितः । स्मरणस्यासर्वथाभावं वाशब्दः स्फुटयति । 'सदा च मत्परमो जनः सर्वथा स्यात्'–इति तात्पर्यं मुनिरेव प्रकटयति ; यदाह 'तस्मात्सर्वेषु कालेषु मामनुस्मर' इति । तेनेत्थमत्र पदसङ्गतिः;–सदा यं यं भावं स्मरन् कलेवरं त्यजति अन्तेऽपि वा स्मरन्, वाग्रहणादस्मरन्वा, तं तमेवैति । यतोऽसौ सदा तद्भावेन भावितः । अन्ये तु–कलेवरं त्यजति सति अन्ते–कलेवरत्यागक्षणे बन्धुपुत्रादिप्रमात्रगोचरे श्वासायासहिक्कागद्गदिकादिचेष्टाचरमभाविनि क्षणे शरीरदार्ढ्यबन्धप्रतनूभावादेहकृतसुखदुःखमोहवन्ध्ये कालांशे देहत्यजनशब्दवाच्ये यदेव स्मरति तदेव प्रथमसंविदनुगृहीतमस्य रूपं संपद्यते । तादृशे च काले स्मरणस्य कारणं–सदा तद्भावभावितत्वमिति । त्यजति–इति सप्तमी योज्या–इति प्राक्तन एवार्थः । ननु एवमन्तकाले, किं प्रयोजनं तत्स्मरणेन? क एवमाह–प्रयोजनमिति ; किन्तु वस्तुवृत्तोपनतमेव तद्भवति तस्मिन्नन्त्ये क्षणे । ननु पुत्रकलत्रबन्धुभृतैः शिशिरोदकपानादेर्वा अन्त्ये क्षणे दृष्टं स्मरणम् इति तद्भावापत्तिः स्यात्? मैवम् । नहि सोऽन्त्यः क्षणः–स्फुटदेहावस्थानात् । नह्यसावन्त्यः क्षणोऽस्मद्विवक्षितो भवादृशैर्लक्ष्यते । तत्र त्वन्त्ये क्षणे येनैव रूपेण भवितव्यं, तत्संस्कारस्य दूरवर्तिनोऽपि

'जातिदेशकालव्यवहितानामपि आनन्तर्यम्
स्मृतिसंस्कारयोरेकरूपत्वाद्' ( यो सू० ४,९ )

---

१ 'यं यं वापि' इत्यत्र २ प्रमात्रन्तरागोचरे इति ग० पाठः ।

इति न्यायेन प्रबोधेन भाव्यम् । तद्वशात्तत्स्मरणं तत्स्मृत्या तद्भावप्राप्तिः । कस्यचित्तु देहस्य[1] स्वस्थावस्थायामपि तदेव काकतालीयवशाद्व्यज्यते । यथा मृगादेः पुराणे वर्णनम् तत्कृतं तु मृगत्वम् । अत एव 'प्रयाणकालेऽपि च माम्'—इत्यादौ 'अपि च'—इति ग्रहणम् । ये हि सदा भगवन्तं भावयन्ति—'एवंभूता भविष्यामः'—इति । तेषां

'तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी' ॥ (यो० सू० १। ५०)

इति न्यायेन तस्यामलक्ष्यायामन्तदशायां संस्कारान्तरापहस्तनेन तत्संस्कारकृते तत्त्वस्मरणे देहसद्भावक्षणकृते च तस्य स्मरणेऽनन्तरं देहविनिपातक्षण एव कालसंस्कारनिवृत्तेस्तदिदमित्यादिवेद्यविभागानवभासात् संविन्मात्रसतत्त्वपरमेश्वरस्वभावतैव भवति;—इति श्रीमदभिनवगुप्तगुरूणां संमतम्, इत्यलम् । असंशयमिति—नात्र सन्देग्धव्यमिति ॥ ७ ॥

**अभ्यासयोगयुक्तेन चेतसानन्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥**

अनुचिन्तयन्निति, शरीरभेदानन्तरं निवृत्तकलेवरकृतव्यथः पश्चाद्भगवन्तं चिन्तयन्निति ॥ ८ ॥

**कविं पुराणमनुशासितार-**
**मणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूप-**
**मादित्यवर्णं तमसः परस्तात् ॥ ९ ॥**

---

१ देहस्थावस्थायामपीति क० पाठः ।

प्रयाणकाले मनसाचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥

एवमनुस्मरेदिति । आदित्यवर्णमिति—आदित्यवर्णत्वं वासुदेवतत्त्वस्य परिच्छेदकम्;—आकृतिकल्पनादिविभ्रान्तिमयमोहतमसोऽतीतत्वात् रवित्वेन उपमानमित्याशयः । भ्रुवोर्मध्ये—इति प्राग्वत् ॥ १० ॥

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेणाभिधास्ये ॥ ११ ॥

सम्यग् गृह्यते—निश्चीयतेऽनेनेति संग्रहः—उपायः । तेनोपायेन तत्पदम् अभिधास्ये—उपायमत्र सतताभ्यासाय वक्ष्ये ॥ ११ ॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२॥

द्वाराणि—इन्द्रियाणि । हृदि—इत्यनेन विषयसंगाभाव उच्यते, न-तु विष्ठास्थानाधिष्ठानम् । आत्मनः प्राणम्—आत्मसारथिम् इच्छाशक्त्यात्मनि मूर्ध्नि—सकलतत्त्वातीते, धारयन्निति कायनियमः ॥१२॥

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।

यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १३ ॥
अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥

ओमिति जपन्निति वाङ्नियमः । मामनुस्मन्निति चेतसोऽनन्यगामिता । यः प्रयाति–दिनाद्दिनमपुनरावृत्तये गच्छति । तथा च–देहं त्यजन्–'कथं मे पुनरिदं सकलापत्स्थानं शरीरं मा भूयात्'–इत्येवं यो मामनन्यचेताः स्मरति सततमेव; याति–जानाति स मद्भावम् । नत्वत्र मुनेः परंब्रह्माद्वैतपदोपक्षेपविरोधी[1] उत्क्रान्तौ भरः । तथा चोक्तं

'व्यापिन्यां शिवसत्तायामुत्क्रान्तिर्नाम निष्फला ।
अव्यापिनि शिवे नाम नोत्क्रान्तिः शिवदायिनी ॥'

इति । यदि वा सतताभ्यासोऽपि यैर्न कृतस्तथापि कुतश्चित्स्वतन्त्रेश्वरेच्छादेर्निमित्तादन्त्ये एव क्षणे यदा तादृग्भावो जायते, तदायमुत्क्रान्तिलक्षण उपायः संस्कारान्तरप्रतिबन्धक उक्तः । अत एव 'यदक्षरं वेदविदो वदन्ति' इत्यादिना 'अभिधास्ये' इत्यन्तेन प्रतिज्ञा कृता क्षणमात्रस्यापि भगवदनुचिन्तनस्य सकलसंस्कारविध्वंसनलक्षणामद्भुतवृत्तिं प्रतिपादयितुम् । यदाहुराचार्यवर्याः

'निमेषमपि[2] यद्येकं क्षीणदोषे करिष्यसि ।
पदं चित्ते तदा शंभो किं न संपादयिष्यसि ' ॥ (स्त० चिं०, श्लो० ११४)

---

१ विरोधीति उत्क्रान्तौ भर इति घ० पाठः । २ हे शंभो ! त्वदिच्छयैव 'क्षीणदोषे'–निवृत्तकुप्राचीनसंस्कारे चित्ते, मादृशाम् अनुग्राह्याणां यदि क्षणमेकमपि 'पदम्'–अनुग्रहीतृत्वेन अधिष्ठानं करिष्यसि, तदा 'किं न संपादयिष्यसि'–सर्वाः प्रार्थनाः तत्क्षणं पूरयस्येवेत्यर्थः ।

इति । अत एव 'प्रयाणकाले स्मरणेन विना खण्डना'-इति येषां शङ्का तान् वीतशङ्कान्कर्तुमुक्तम्-अनन्यचेताः सततमिति ;-अन्यत्र फलादौ साध्ये यस्य न चेत इत्यर्थः । तस्याहं सुलभ इति ;-तस्य न किंचित्प्रयाणकालौचित्यपर्येषणम्-तीर्थसेवा, उत्तरायणम्, आयतनसंश्रयः, सत्त्वविशुद्धिः[1], सचिन्तैकत्वं[2], विषुवदादिपुण्यकालः, दिनम्, अकृत्रिमपवित्रभूपरिग्रहः, स्नेहमलविहीनदेहता, शुद्धवस्त्रादिग्रहः-इत्यादिक्लेशोऽभ्यर्थनीय इत्यर्थः । यत्प्रागुक्तं-'तीर्थे श्वपचगृहे वा'-इत्यादि ॥ १४ ॥

ननु 'मद्भावं याति'-इत्युक्तम् । तत्किं प्राप्तेऽपि पुनरावृत्तिरस्ति ? इत्याशङ्क्याह—

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥**

अन्यतस्तु सर्वत एव पुनरावृत्तिरस्तीति समनन्तरेण श्लोकेन प्रतिपादयिष्यते । मां तु प्राप्य न पुनर्योगिनो जन्मादित्रासमाप्नुवन्ति[3] ॥ १५ ॥

**आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥**

ब्रह्मलोकमाप्तानामपि पुनरावृत्तिरस्ति-इति सर्वैर्व्याख्यातम् । एतदभ्युपगमे च 'तदुपरितनलोकगतिर्मुक्तिः'-इत्यभिहितं स्यात् ।

---

१ विशुद्धि इति क० पाठः २ सचित्तकत्वमिति घ० पाठः ३ 'न स पुनरावर्तते' इति श्रुतेः, 'यं प्राप्य न निवर्तन्ते'-इत्यग्रेऽपि-इति ग० पुस्तके अधिकः पाठः ।

तच्च न हृदयंगमम्; इति संशयमहामोहकलुषीकृतान्तर्दृशामस्माकं प्रतिभातीयमागमाधिगता व्याख्यावर्त्तिः, आब्रह्म–यावत् ब्रह्मपदं प्राप्तं तावत् यस्मात्कस्माच्चित्तिर्यगूर्ध्वाधस्तात्भुवनात् पुनरावर्तन्ते–चक्रवत्स्थानान्तरमविरतं भ्राम्यन्तो विपरिवर्तन्ते इति ॥ १६ ॥

ननु क एवं जानाति, यत्सर्वभुवनेभ्यः पुनरावृत्तिः। ब्रह्मादय एव हि तावच्चिरतरस्थायिनः श्रूयन्ते। ते एव तावत्कथं पुनरावर्तिनः। पुनरावर्तित्वे हि तेऽपि स्युः प्रभवाप्ययधर्माणः[1] इत्याह—

**सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः॥ १७ ॥**
**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥**
**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते।**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १६ ॥**

ये खलु दीर्घदृश्वानस्ते ब्रह्मणोऽपि रात्रिं दिनं पश्यन्ति प्रलयोदयतया। तथाच। अहरहस्त एव विबुध्य निजां निजामेव चेष्टामनुरुध्यन्ते। प्रतिरात्रि च तेषामेव निवृत्तपरिस्पन्दानां शक्तिमात्रत्वेनावस्थानम्। एवं सृष्टौ प्रलये च पुनःपुनर्भावः। नान्येऽन्ये उपसृज्यन्ते; अपितु ते एव जीवाः। कालकृतस्तु चिरचिप्रप्रत्ययात्मा विशेषः। एष च परिच्छेदः प्रजापतीनामप्यस्ति। ततश्च तेऽपि प्रभवाप्ययधर्माण एव–इति स्थितम् ॥ १६ ॥

---

१ भव इति क० पाठः।

सर्वतो लोकेभ्यः पुनरावृत्तिर्नतु मां प्राप्य; इति स्फुटयति–

**परस्तस्मात्तु भावोऽन्यो व्यक्ताव्यक्तः सनातनः।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति॥ २०॥**

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम॥ २१॥**

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।**
**यं प्राप्य न पुनर्जन्म लभन्ते योगिनोऽर्जुन॥ २२॥**

**यस्यान्तःस्थानि भूतानि यत्र सर्वं प्रतिष्ठितम्।**

उक्तप्रकारं कालसंकलनाविवर्जितं तु वासुदेवतत्त्वम्। व्यक्तम्–सर्वानुगतम्, तस्थेऽपि अव्यक्तं–दुष्प्रापत्वात्। तच्च भक्तिलभ्यमित्यावेदितं प्राक्। तत्रस्थं चैतद्विश्वम्। यत् खल्वविनाशि रूपं सदा तथाभूतं, तत्र कः पुनःशब्दस्यावृत्तिशब्दस्य चार्थः। स हि मध्ये तत्स्वभावविच्छेदापेक्षः। न च सदातनविश्वोत्तीर्णविश्वाव्यतिरिक्तविश्व[1]प्रतिष्ठात्मकपरबोधस्वातन्त्र्यस्वभावस्य श्रीपरमेश्वरस्य तद्भावप्राप्तिः, येन स्वभावविच्छेदः कोऽपि कदाप्यस्ति। अतो युक्तमुक्तं–'मामुपेत्य तु'–इति॥ २२॥

एवं च सतताभ्यासेन येषां क्लेशं विनैव भगवदाप्तिस्तेषां वृत्तमुक्तम्, इदानी[2]मुत्क्रान्त्या येऽपवर्गं भोगं चेच्छन्ति, तेषां कश्चिद्विशेष उच्यते—

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः।**

१ विश्वनिष्ठात्मकेति घ० पाठः २ इदानीं पुनरिति क० पाठः।

प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

अनावृत्तिः–मोक्षः । आवृत्तिः–भोगाय ॥ २३ ॥

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥
धूमो[1] रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥

उत्तरेण–ऊर्ध्वेन अयनं–षाण्मासिकम् । तच्च प्रकाशादिधर्मकत्वात् दहनादिकैः शब्दैरुपचर्यते । अतो विपरीतं विपर्ययेण । तत्र चन्द्रमसो भोग्यांशानुप्रवेशाद्भोगायावृत्तिः ॥ २५ ॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
अनयोर्यात्यनावृत्तिमाद्ययावर्ततेऽन्यया ॥ २६ ॥

अनयोर्गत्योर्मध्यादाद्यया-अनावृत्तिः-मोक्षः । अन्यया भोगः ।२६

नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

एते सृती यो वेत्ति–आभ्यन्तरेण क्रमेण योगाभ्यासस्वीकृतेनेत्यर्थः । एतच्च वितत्य प्रकाश्यमानं ग्रन्थं विस्तारयतीत्यलम् । सर्वे ये काला आभ्यन्तराः; तद्विषयं योगमभ्यस्येत् । अस्मद्गुरवस्त्वाहुः–सर्वानुग्राहकतया मध्ये आभ्यन्तरकालकृतमुत्क्रान्तिभेदमभिधाय प्रकृतमेव बाह्यकालविषयं मुख्यं प्रमेयमुपसंहृतम्,

---

१ धूमः कृष्णस्तथा रात्रिः, इति क० पाठः ।

'तस्मात्सर्वेषु कालेषु'–इत्यादिना ॥ २७ ॥

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अभ्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥

अभ्येति–अभिभवति,–सर्वकर्मसंस्काराणां भगवत्स्मृत्या विफलीकरणात् । सर्वकर्मपरिक्षये चासौ सुखेनैव विन्दति परं शिवमिति शिवम् ॥ २८ ॥

अत्र संग्रहश्लोकः

सर्वतत्त्वगतत्वेन विज्ञाते परमेश्वरे ।
अन्तर्बहिर्न सावस्था न यस्यां भासते विभुः ॥ ८ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहेऽष्टमोऽध्यायः ॥ ८ ॥

अथ

## नवमोऽध्यायः

श्रीभगवानुवाच

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१॥

अनसूयत्वं ज्ञानसंक्रान्तौ कारणं मुख्यम् । ज्ञानविज्ञाने–प्राग्वत् ॥ १ ॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

राजते—सर्वविद्यामध्ये दीप्यते या । इहैव ह्युच्यते—'अध्यात्मविद्या विद्यानाम्' इति । राज्ञाम्—जनकादीनामत्राधिकारस्तेषां रहस्यम्—अतिगुप्तत्वात् क्षत्रियसुलभेन वीरभावेनाविकम्पत्वात्। कर्तुम्—अनुष्ठातुं सुसुखम् । न चास्य ब्रह्मोपासनात्मनः कर्मणोऽन्यकर्मवदुपभोगादिना व्ययोऽस्ति ॥ २ ॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

निवर्तन्ते—पुनःपुनर्जायन्ते म्रियन्ते च ॥ ३ ॥

मया ततमिदं कृत्स्नं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

मत्स्थानि सर्वभूतानीति—सुचिरमपि गत्वा अन्यस्य प्रतिष्ठाधाम्नोऽविद्यमानत्वात् । भूतरूपबोध्यात्मकप्रसिद्धतदीयजडरूपपुरःसरीकारेण तदवभासे तद्विपरीतबोधस्वभावतिरोधानम् । इत्येतदाह—'न चाहं तेष्ववस्थितः'—इति ॥ ४ ॥

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥

न च मत्स्थानि—अविद्यान्धानां तत्त्वादृष्टेः । नहि मूढा अविच्छिन्नसंवित्स्वभावं परमेश्वरं समस्तवस्तुपरिच्छेदप्रतिष्ठास्थानं मन्यन्ते । अपितु 'कृशो देवदत्तोऽहम्, इदं वेद्मि, भूतले इदं

स्थितम्'-इति मितमेव स्वभावं प्रतिष्ठास्थानतया पश्यन्ति। ननु कथमेतद्विरुद्धम्? इत्याह-'पश्य मे योगमैश्वरम्'-इति। योगः-शक्तिः-युज्यमानत्वात्। एतदेव ममैश्वर्य-यदेवं निरतिशयाद्भुतवृत्तिस्वातन्त्र्यमित्यर्थः॥ ५॥

**यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय॥ ६॥**
**एवं हि सर्वभावेषु चराम्यनभिलक्षितः।**
**भूतप्रकृतिमास्थाय सहैव च विनैव च॥ ७॥**

यद्वदाकाशवाय्वोरविनाभाविन्यपि संबन्धे न जातुचिन्नभःस्पृश्यता श्रूयते, एवं सकलसंसारविसार्यपि भगवत्तत्त्वं न सर्वजनविषयम्॥ ७॥

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥ ८॥**

प्रकृतिम्-अव्यक्तरूपाम्॥ ८॥

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्॥ ९॥**

स्वां प्रकृतिमवष्टभ्य-इत्येतावता जडोऽपि स्वतोऽयं भावग्रामः परप्रकृत्यन्वयात्प्रकाशतां प्राप्तः॥ ९॥

**न च मां तानि कर्माणि निबध्नन्ति धनञ्जय।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु॥ १०॥**

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ ११ ॥

न च मेऽस्ति कर्मबन्धः ;—औदासीन्येन वर्तमानोऽहं यतः । अत एवाहं जगन्निर्माणेऽनाश्रितव्यापारत्वाद्धेतुः ॥ ११ ॥

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ १२ ॥

सोऽहं सर्वजनान्तःशायी सर्वस्यात्मपररूपतयावज्ञास्पदम्—यन्मानुषादि[1]चतुर्दशविधसर्गव्यतिरिक्त ईश्वरो नोपलभ्यते स कथमस्तीति ॥ १२ ॥

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
आसुरीं राक्षसीं चैव प्रकृतिं मोहनीं श्रिताः ॥ १३ ॥

तेषां च कर्म ज्ञानमाकाङ्क्षा च सर्वं निष्फलम्—अवस्तुविषयत्वात् । आसुरीं राक्षसीं चेति—उद्रिक्तरजस्तमोधर्माण इति ॥ १३ ॥

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १४ ॥
सततं कीर्तयन्तश्च यतन्तश्च यतव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १५ ॥

---

१ चतुर्दशविधत्वं सर्गस्य यथा—

'अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥ इति ।

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**

**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥**

दैवीं–सात्त्विकीम् । यजन्तो–बाह्यद्रव्यादियागैः । अन्ये तु मां ज्ञानयज्ञेनैवोपासते । अतः केचित् एकतया-ज्ञानतः । केचित् बहुधा–कर्मयोगात् । मत्परा एव सर्वे ॥ १५ ॥

ननु कर्म तावत्कारककलापव्याप्तभेदोद्रेकि कथमभिन्नं भगवत्पदं प्रापयतीति ? उच्यते—

**अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।**

**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥**

**पिताहमस्य जगतो माता धाता[1] पितामहः ।**

**वेद्यं पवित्रमोंकार[2] ऋक्साम यजुरेव च ॥ १७ ॥**

**गतिर्भर्ता प्रभुः[3] साक्षी निवासः शरणं[4] सुहृत् ।**

**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥**

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**

**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥**

एकस्यैव निर्भागस्य ब्रह्मतत्त्वस्य परिकल्पितसाधनाधीनं कर्म पुनरेकत्वं निर्वर्तयति ;–क्रियायाः सर्वकारकात्मसाक्षात्कारेणावस्थाने भगवत्पदप्राप्तिं प्रत्यविदूरत्वात् । उक्तं च—

※ ' सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी ।
बन्धयित्री, स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥ ' (स्प०, ३ नि०, १६ श्लो०)

---

१ पोष्टा २ परावरयोर्ब्रह्मणोर्वाचकः ३ नियन्ता ४ आर्तिहन्ता

* सेयं पारमेश्वरी क्रियाशक्तिरिदमहं करोमि–इत्यादिभेदावग्रहशालिनि ※

इति । मयाप्युक्तं—

‘ उपक्रमे यैव बुद्धिर्भावाभावानुयायिनी ।
उपसंहृतिकाले सा भावाभावानुयायिनी ॥ ’

इति तत्र तत्र वितत्य विचारितचरमेतत् इतीहोपरम्यते । तपाम्यहमित्यादि—अद्वैतकथाप्रसङ्गेनोक्तम् ॥ २० ॥

नन्वेवं यदि बाह्ययागादिनापि ब्रह्माप्तिः, तर्ह्यग्निष्टोमादिष्वपि किमन्यो याज्यः ? अभ्युपगमे भेदवादः, वासुदेव एवेति चेत् ; कथं नापवर्गस्तैः ? तदर्थमुच्यते—

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान्॥२१॥

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २२ ॥

यद्यपि ते मामेव यजन्ते तथापि स्वर्गमात्रप्रार्थनया मितक-

---

* पशौ वर्तमाना हानादानादिक्षोभमयत्वात् बन्धमेवाधत्ते। सैव पुनः“संविदेवेदं सर्वम्” इति शिवशक्त्यात्मकं स्वं मार्गमधितिष्ठन्ती, ज्ञाता सद्य एव तां तां सिद्धिमुपपादयेत् । सिद्धिश्चेयमत्र विवक्षिता—“ अविच्छिन्नस्वात्मसंवित्प्रथा सिद्धिरिहोच्यते । सा भोगमोक्षस्वातन्त्र्यमहालक्ष्मीरिहाक्षया ॥ ” इति ।

र्मनिजसत्त्वदुर्बलतया स्वर्गादिमात्रेणैव फलेनावच्छिन्दन्ति । अत एवैषां पुनरावर्तको धर्मः । एवं ते गतागतं लभन्ते, नतु यागस्य पुनरावृत्तिप्रसवधर्मा स्वभावः ॥ २२ ॥ तथाहि

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २३ ॥

तेभ्योऽन्ये मां चिन्तयन्तः, कथम्? अनन्या—अविद्यमानम् अन्यत्—मद्व्यतिरिक्तं कामनीयं फलं येषामिति । योगः—अप्रतिलब्धमत्स्वरूपलाभः । क्षेमं—प्राप्तभगवत्स्वरूपप्रतिष्ठालाभपरिरक्षणम् । येन योगभ्रष्टत्वशङ्कापि न भवेदित्यर्थः ॥ २३ ॥

[1]येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २४ ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।

---

१ अयं श्लोकसंदर्भ आचार्यपादैरेव श्रीतन्त्रालोके विवृतः—

"ये बोधाद्व्यतिरिक्तं हि किंचिद्याज्यतया विदुः ।
तेऽपि वेद्यं विविञ्चाना बोधाभेदेन मन्वते ॥
तदेकसिद्धा इन्द्राद्या विधिपूर्वा हि देवताः ।
अहंबोधस्तु न तथा, ते तु संवेद्यरूपताम् ॥
उन्मग्नामेव पश्यन्तस्तं विदन्तोऽपि नो विदुः ।
तदुक्तं न विदुर्मां तु तत्त्वेनातश्चलन्ति ते ॥
चलनं तु व्यवच्छिन्नरूपतापत्तिरेव या ।
देवान्देवयजो यान्तीत्यादि तेन न्यरूप्यत ॥
निमज्ज्य वेद्यतां ये तु तत्र संविन्मयीं स्थितिम् ।
विदुस्ते ह्यनवच्छिन्नं तद्भक्ता अपि यान्ति माम् ॥
सर्वत्रात्र ह्यहंशब्दो बोधमात्रैकवाचकः ।
स भोक्तृप्रभुशब्दाभ्यां याज्ययष्टृतयोदितः ॥ " इति

नतु मामभिजानन्ति तत्त्वेनातश्चलन्ति ते ॥ २५ ॥
यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २७ ॥

येऽपि च नामधेयान्तरैरुपासते तेऽपि मामेवोपासते । नहि ब्रह्मव्यतिरेकि किंचिदुपास्यमस्ति । किन्तु–अविधिनेति विशेषः । अविधिः–अन्यो विधिः, नानाप्रकारैर्विधिभिरहमेव परंब्रह्मसत्तास्वभावो याज्य इति । नतु यथान्यैर्दर्शनान्तरदूषणसमुपार्जितमहापातकमलीमसैर्व्याख्यातम्–अविधिना–दुष्टविधिनेति । एवं हि सति 'मामेव यजन्ते, सर्वयज्ञानां चाहमेव भोक्ता'–इति दृश्यमानमेतदसमञ्जसीभवेत् । इत्यलं कल्मषकलिलैः साकं संलापेन । अस्मद्गुरवस्तु निरूपयन्ति,–अन्या–स्वात्मव्यतिरिक्ता भेदवादनयेन ब्रह्मस्वभावहीनैव काचिद्देवता–इति गृहीत्वा तामेव यजन्ते । तेऽपि वस्तुतो मामेव-स्वात्मरूपं यजन्ते; किन्तु अविधिना–दुष्टेन विधिना भेदग्रहणरूपेणेति । अत एवाह–नतु मां–स्वात्मानं तत्त्वेन–देवतारूपतया भोक्तृत्वेन जानन्ति; अतः चलन्ते–मद्रूपात् । किं देवव्रतत्वेन देवान्यान्ति–इत्यादि एतदेव चलनमिति यावत् । ये तु मत्स्वरूपमभेदेन विदुस्ते देवभूतपितृयागादिनापि मामेव यजन्ते । ते च मद्याजिनो मामेव गच्छन्तीत्युपसंहरिष्यति । ननु द्रव्यत्यागार्थमुद्दिष्टा देवतेत्युच्यते, तत्कथमनुद्दिश्य स्वात्मतत्त्वस्य याज्यत्वम् 'आदित्यः प्रापणीयः[1]

१ प्रयाणीय इति ग० पाठः ।

चरुः'-इति विधिशेषभूतदेवतोद्देशात्मकविध्यन्तरभावितो[1] ह्य-सावुद्देशः । न च स्वात्मविषयो विधिरस्ति-इत्यभिप्रायेणाह 'अ-विधिपूर्वकं मामिति' । स्वात्मव्यतिरिक्तायां देवतायामस्ति अपेक्ष्यो विधिः-अप्राप्तप्रापणरूपत्वात् । स्वात्मा तु परमेश्वरो न विधिपू-र्वको-विधिपरिप्रापितत्वाभावात् । नहि तदनुद्देशेन किंचित्प्रवर्तते । तेन विधिपरिप्रापितेन्द्रादिदेवतोद्देशेषु सर्वेषु स स्वात्मा विश्वाव-भासनस्वभावः तदुद्देश्यदेवतावभासभित्तिस्थानीयतयैवाहमहमिकया सततावभासमानः स्रक्सूत्रकल्पः सततोद्दिष्ट इति युक्तिसिद्धमेतत् मामेव यजन्ति-अविधिपूर्वकत्वात् । मुख्यभूतमत्प्राप्तिफलस्य ता-न्प्रति कर्त्रभिप्रायत्वं नास्ति; अपितु परिमितदक्षिणास्थानीये-न्द्रादि[2]पदमात्रप्राप्तेरेव[3] याजकवच्चरितार्थत्वमेषाम्-इति प्रथयितुं पर-स्मैपदम् । यदुक्तं मयैव—

"वेदान्वेद न वेद शांभवपदं दूयेत निर्वेदवान्
स्वर्गार्थी यजमानतां प्रतिजहज्जातो यजन्याजकः ।
सर्वाः कर्मरसप्रवाहप्रसराः[4] संवित्स्रवन्त्योऽखिला-
स्त्वामानन्दमहाम्बुधिं विदधते नाप्राप्य पूर्णां स्थितिम् ॥"

इति ॥ २६ ॥

एवं य उक्तक्रमेण वेत्ति;-तस्येन्द्रादिदेवतायागोऽपि परमेश्व-रयाग इति, यदप्यन्यत्कर्म तदपि महेश्वरस्वात्मार्चनरूपं तस्यैव सर्वत्रोद्देशात्—इत्याह

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**

---

१ विध्यन्तरप्रभावित इति ख० पाठः २ इन्द्रपदादिमात्रेति क० पाठः
३ प्राप्तय एवेति घ० पाठः ४ विरसा इति क०, घ० पाठः ।

यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २८ ॥

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।

संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २९ ॥

देवतान्तरयाजिनो यतो मितमनोरथाः फलं लघयन्ति अतस्त्वं सर्वं प्रागुक्तोपदेशक्रमेण मदर्पणं–मन्मयत्वेन भावनं कुरु । एष एव च संन्यासयोगः । इति विस्तीर्णं विस्पष्टप्रायं पुरस्तादेव ॥ २९ ॥

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।

ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥३०॥

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।

साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥३१॥

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।

कौन्तेय प्रतिजानेऽहं न मद्भक्तः प्रणश्यति ॥ ३२ ॥

प्रतिजाने इति;–युक्तियुक्तोऽयमर्थो भगवत्प्रतिज्ञातत्वात्सुष्ठुतमां दृढो भवति ॥ ३२ ॥

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।

स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ३३

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।

अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३४ ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।

**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३५ ॥**

पापयोनयः-पशुपक्षिसरीसृपादयः । स्त्रिय इत्यज्ञाः । वैश्या इति-कृष्यादिकर्मान्तररताः । शूद्रा इति-कात्स्न्र्येन वैदिकक्रियानधिकृताः परतन्त्रवृत्तयश्च । तेऽपि मदाश्रिता मामेव यजन्ते । (गजेन्द्रमोक्षणादीनि चरितानि हि परमकारुणिकस्य भगवतः सहस्रशः श्रूयन्ते ) किमङ्ग पुनरेतद्विपरीतवृत्तयः । केचिदाचक्षते- 'द्विजराजन्यप्रशंसापरमेतद्वाक्यं नतु स्त्र्यादिष्वपवर्गप्राप्तितात्पर्येण'-इति । ते हि भगवतः सर्वानुग्राहिकां शक्तिं मितविषयतया खण्डयन्तः, तथा परमेश्वरस्य परमकृपालुत्वमसहमानाः 'न मे द्वेष्योऽस्ति न प्रियः', 'अपि चेत्सुदुराचारः' इत्यादीन्यन्यानि चैवंप्रकारस्फुटार्थप्रतिपादकानि वाक्यानि विरोधयन्तो निरतिशययुक्तिप्रपञ्चसाधिताद्वैतभगवत्तत्त्वे भेदलिङ्गं बलादेवानयन्तो अन्यांश्चागमविरोधानचेतयमानाः, 'कथमिदं कथमिदम्'-इति पर्यनुयुज्यमाना यदि परमन्तर्गर्भीकृतजात्यादिमहाग्रहाविष्टान्तःकरणाः मात्सर्यावहित्थलज्जाजिह्मीकृतावाङ्मुखदृष्टयः समग्रस्य जनस्यासत्प्रलापिन इति हास्यरसविषयभावमात्मन्यारोपयन्ति । यत्पूर्वैव व्याख्या सर्वस्य करोति शिवमिति शिवम् ॥ ३५ ॥

---

१ स्मर्यते हि मार्कण्डेये परमेश्वरानुगृहीतमहर्षिवरप्रभावेण पक्षिणामुत्तमाधिकारित्वलाभेन बाल्य एवातिशीघ्रमेव तत्त्वसाक्षात्कारलाभः, जैमिनिं प्रति पुराणवक्तृत्वं च । वासिष्ठे च श्रीसरस्वतीकरकमलस्पर्शप्रभावेण भुसुण्डप्रमुखानां काकानां तत्त्वसाक्षात्कारः । तत्र भुसुण्डस्य वसिष्ठं प्रति वक्तृत्वं च स्मर्यते, काश्यां म्रियमाणानां च सर्वेषां स्थावराणां कृम्यादीनां च विश्वेशप्रसादात् तारकोपदेशप्राप्त्या मोक्षस्मरणाच्च । एवं च परमेश्वरानुगृहीतानां किं किं न संभाव्यते इति ।

अत्र संग्रहश्लोकः

अद्वैते ब्रह्मणि परा सर्वानुग्रहशालिनी ।
शक्तिर्विजृम्भते तेन यतनीयं तदाप्तये ॥ ९ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते
श्रीमद्भगवद्गीतार्थसंग्रहे नवमोऽध्यायः ॥ ९ ॥

अथ

# दशमोऽध्यायः

प्राक्तनैर्नवभिरध्यायैर्य एवार्थो लक्षितः स एव प्रतिपदपाठैरस्मिन्नध्याये प्रतायते । तथा चाह–'भूय एव'–इति । उक्तमेवार्थं स्फुटीकर्तुं[1] पुनः कथ्यमानं शृणिवति । अर्जुनोऽप्येवमेवाभिधास्यति–'भूयः कथय' इति–इत्यध्यायतात्पर्यम् । शिष्टं निगदव्याख्यातमिति किं पुनरुक्तेन । संदिग्धं तु निर्णेष्यते ।

श्रीभगवानुवाच

**भूय एव महाबाहो शृणु मे परमं वचः ।**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥**
**न मे विदुः सुरगणाः प्रभवं[2] न महर्षयः ।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥**
**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।**

---

१ विस्पष्टीकर्तुमिति क० पाठः २ प्रभावमिति घ० पाठः ।

असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवो भावो भयं चाभयमेव च ॥ ४ ॥

असंमोहः–उत्साहः ॥ ४ ॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥

महर्षयः[1] सप्त पूर्वे[2] चत्वारो[3] मनवस्तथा ।
मद्भावा[4] मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥

अयं सर्वस्य प्रभव इतः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमान्विताः ॥ ८ ॥

मच्चित्ता मद्गतप्राणा बोधयन्तः[5] परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति रमयन्ति च ॥ ९ ॥

परस्परबोधनया अन्योन्यबोधस्फारसंक्रमणात् 'सर्व एव हि प्रमातार एक ईश्वरः'–इति विततव्याप्त्या सुखेनैव सर्वशक्तिकसर्वगतस्वात्मरूपताधिगमेन माहेश्वर्यमेषामिति भावः ॥ ९ ॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।

---

१ भृग्वादयो वसिष्ठान्ताः २ सर्वेभ्यः प्राक्तनाः ३ स्वायंभुवादयः ।
४ मत्तः भाव उत्पत्तिर्येषां ते मद्भावाः ५ स्वानुभवसंवादेन ज्ञापयन्तः ।

ददामि बुद्धियोगं तं येन मां प्रापय[1]न्ति ते ॥ १० ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

अर्जुन उवाच

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि माम् ॥१३॥
सर्वमेतदृतं मन्ये यन्मे वदसि केशव ।
नहि ते भगवन्व्यक्तिं विदुर्देवा महर्षयः ॥ १४ ॥
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥
वक्तुमर्हस्यशेषेण विभूतीरात्मनः शुभाः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ।१६।
कथं विद्यां मह[2]ायोगिंस्त्वामहं परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१८॥

---

१ उपयान्ति ते, इति घ० पाठः २ अनन्यसाधारणसमाध्येयकनिष्ठ

श्रीभगवानुवाच

हन्त ते कथयिष्यामि विभूतीरात्मनः शुभाः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १६ ॥
अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥
वेदानां सामवेदोऽहं देवानामस्मि वासवः[1] ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२॥
रुद्राणां शङ्करश्चास्मि वित्तेशो[2] यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥
पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनान्यामप्यहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥
महर्षीणां भृगुरहं गिराम[3]स्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥
अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६॥
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।

---

१ देवानां—त्रयस्त्रिंशद्गणभेदेन पुराणपठितानां वासव इन्द्रोऽहम् २ कुबेरः
३ गिराम्—अर्थवाचकपदानां मध्ये एकाक्षरं—प्रणवोऽहमित्यर्थः ।

ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥
आयुधानामहं वज्रं धेनूनामस्मि काम[1]धुक् ।
प्रज[2]नश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥२८॥
अनन्त[3]श्चास्मि नागानां वरुणो याद[4]सामहम् ।
पितॄणामर्यमा चास्मि यमः संय[5]मतामहम् ॥ २९ ॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥
पवनः पव[6]तामस्मि रा[7]मः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जा[8]ह्नवी ॥३१॥
सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥
अक्षराणामकारोऽस्मि द्व[9]न्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३ ॥
मृत्युः सर्वहर[10]श्चाहमुद्भवश्च भविष्यताम् ।
[11]कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ।

---

१ वसिष्ठस्य कामधेनुः २ अपत्यजनयिता कन्दर्पः कामोऽहम् ३ शेष इत्यर्थः ४ जलदेवतानां मध्ये ५ दुष्टनिग्रहं कुर्वतां मध्ये यमोऽहमित्यर्थः ६ पावनकर्तॄणां मध्ये ७ दाशरथिरित्यर्थः ८ गङ्गा ९ 'सामासिकस्य'–तत्पुरुषबहुव्रीह्यादेः समाससमूहस्य मध्ये सकलपदार्थप्राधान्येन युगपदधिकरणवचनत्वादिना च द्वन्द्वस्य प्राधान्यम् १० सर्वं हरतीति सर्वहरः ११ नारीणां मध्ये कीर्त्यादिक्षमान्ता देवताः स्त्रियोऽहमित्यर्थः ।

बृहत्साम[1] तथा साम्नां गायत्री[2] छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः[3] ॥ ३५ ॥
द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि[4] सत्त्वं सत्त्ववतामहम् ३६
वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना[5] कविः ॥ ३७ ॥
दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम्[6] ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥
यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न[7] तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥३९॥
नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव[8] वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥ ४१ ॥
अथवा बहुनैतेन किं ज्ञानेन तवार्जुन ।

---

१ सामवेदे यानि सामानि रथन्तरादीनि, तेषां मध्ये बृहत्सामाहम् २ चतुर्विंशत्यक्षरा ३ वसन्तः ४ उद्योग इत्यर्थः ५ 'कवीनां'—तत्त्वज्ञानां मध्ये उशना शुक्रोऽहम् ६ जेतुमिच्छताम् ७ सिद्धमेवार्थं व्यतिरेकमुखेनाह—'न तदस्तीति'—मद्भिन्नं चरमचरं वा यद्वस्तु स्यात्तज्जगत्त्रयेऽपि नास्तीत्यर्थः । ८ 'श्रीः'—लक्ष्मीः संपत् शोभा कान्तिर्वा, तया युक्तं, तथा ऊर्जितं बलातिशयेन युक्तमित्यर्थः ।

विष्टभ्याहमिदं[1] कृत्स्नमेकांशेन जगत्स्थितः ॥ ४२ ॥

'अहमात्मा' इत्यनेन व्यवच्छेदं निवारयति ; अन्यथा 'स्थावराणां हिमालयः' इत्यादिवाक्येषु हिमालय एव भगवान्नान्यः इति व्यवच्छेदेन निर्विभागत्वाभावात् ब्रह्मदर्शनं खण्डितमभविष्यत्। यतो यस्याखण्डाकारव्याप्तिस्तथा चेतसि नोपारोहति, तां च जिज्ञासति तस्यायमुपदेशग्रन्थः । तथाहि। उपसंहारे भेदाभेदवादं–'यद्यद्विभूतिमत्सत्त्वम्' इत्यनेनाभिधाय, पश्चादभेदमेवोपसंहरति—

'अथवा बहुनैतेन ........................
विष्टभ्याहम् ......... एकांशेन जगत्स्थितः' ॥

इति । उक्तं हि—

'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' ।

इति। प्रजानां सृष्टिहेतुः सर्वमिदं भगवत्तत्त्वमेव तैस्तैर्विचित्रै रूपैर्भाव्यमानं सकलस्य विषयतां यातीति शिवम् ॥ ४२ ॥

अत्र संग्रहश्लोकः

इच्छायामिन्द्रिये वापि यदेवायाति गोचरम् ।
हठाद्विलापयंस्तत्तत्प्रशान्तं ब्रह्म भावयेत् ॥ १० ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते
श्रीमद्भगवद्गीतार्थसंग्रहे दशमोऽध्यायः ॥ १० ॥

---

१ अहमिति च सर्वत्रात्र पारमार्थिकमेव प्रकाशविमर्शरूपमुक्तम्, नतु मायीयं चतुर्भुजादि,–"स्थावराणां हिमालयोऽहम्"–इत्यादेः प्रत्यक्षादेर्विरोधादिति । इति आचार्यपादैरेव प्रत्यभिज्ञाविवृतिविमर्शिन्याम् ।

अथ

# एकादशोऽध्यायः

समनन्तरेणाध्यायेन य एवार्थ उक्तस्तमेव प्रत्यक्षीकर्तुमर्जुनः पृच्छति[1] । यो ह्युपदेशक्रमेणार्थोऽवगतः, स एव प्रत्यक्षसंविदोपारुह्यमाणः स्फुटीभवति । तदर्थमेवेमे उक्तिप्रत्युक्ती उच्येते

अर्जुन उवाच

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥
भवाप्ययौ हि भूतानां श्रुतौ विस्तरतो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥
एवमेतद्यथात्थ त्वमात्मानं परमेश्वरम् ।
द्रष्टुमिच्छाम्यहं रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगीश्वर[2] ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

श्रीभगवानुवाच

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥
पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि पाण्डव ॥ ६ ॥

---

१ पृच्छतीत्यनन्तरं 'स एव चायमुद्यमः' इत्यधिकः क० पाठः २ सहजसिद्धनिरतिशययोगत्वादप्रयत्नसाध्ययोगानां सर्वेषां योगयन्तराणां प्रभो।

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ॥ ७ ॥

नतु मां शक्यसे द्रष्टुमनेनैव[1] स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम् ॥ ८ ॥

संजय उवाच

एवमुक्त्वा ततो राजन् महायोगीश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम्[2] ॥ १० ॥

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥

ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

---

१ अनेन प्राकृतेन चर्ममयेन चक्षुषा न द्रष्टुं शक्नोषीत्यर्थः २ दिव्यानि–प्रचण्डप्रकाशवन्त्यनेकान्युद्यतानि चक्रगदाद्यायुधानि यत्र तद्दिव्यानेकोद्यतायुधं रूपमित्यर्थः ।

अर्जुन उवाच

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च[1] सर्वानुरगांश्च[2] दीप्तान् ॥ १५ ॥

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

सात्त्वतधर्मगोप्तेति सत्–सत्यं–क्रियाज्ञानयोरुभयोरपि भेदाप्रति-

---

१ नारदसनकादीन् २ शेषवासुक्यादीन्

भासात्मकं[1], तथा सत्तात्मकं प्रकाशरूपं[2] तत्त्वं विद्यते येषां ते—सात्त्वताः[3]। तेषां धर्मः—अनवरतग्रहणसंन्यासपरत्वात्सृष्टिसंहारविषयः सकलमार्गोत्तीर्णः; तं गोपायते। एतदेवात्राध्याये रहस्यं प्रायशो देवीस्तोत्रविवृतौ मया प्रकाशितम्। तत्सहृदयैः सोपदेशैः स्वयमेवावगम्यते, इति किं पुनःपुनःस्फुटतरप्रकाशनवाचालतया ॥ १८ ॥

अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम्।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः।
दृष्ट्वाद्भुतं रूपमिदं तवेद-
ग्लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥

अमी हि त्वा सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति[4]।
स्वस्तीति चोक्त्वैव महर्षिसङ्घाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः[5] २१

---

१ प्रतिभासात्मकमित्यनन्तरं 'परमगुरौ महादेवेऽर्पणम्' इत्यधिकः पाठः क० ख० ग०पुस्तकेषु २ प्रकाशशीलं तत्त्वमिति क० पाठः ३ तद्वन्त इति ग० पाठः ४ स्तुवन्ति ५ शब्दार्थपुष्टियुक्ताभिः।

रुद्रादित्या वसवो ये च साध्या
  विश्वेऽश्विनौ मरुतश्चोष्मपाश्च[1] ।
गन्धर्वयक्षासुरसिद्धसङ्घा
  वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥
रूपं महत्ते बहुवक्त्रनेत्रं
  महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
  दृष्ट्वा लोकाः प्रव्यथितास्[2]तथाहम् ॥२३॥
नभःस्पृशं दीप्तमनेकवर्णं
  व्यात्तानन[3]ं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
  धृतिं न विन्दामि शमं च विष्णो ॥२४॥
दंष्ट्राकरालानि च ते मुखानि
  दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म[4]
  प्रसीद देवेश जगन्निवास ॥ २५ ॥
अमी सर्वे धृतराष्ट्रस्य पुत्राः

---

१ 'ऊष्मभाजो हि पितरः' इति श्रवणात् पितरः २ प्रकर्षेण व्यथिताः प्रव्यथिता—महाव्यथां प्राप्ताः ३ विस्फारितान्याननानि यत्र तं व्यात्ताननम् ४ सुखम् ।

सर्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ[1]
सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥
वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥
नानारूपैः पुरुषैर्बाध्यमाना
विशन्ति ते वक्त्रमचिन्त्यरूपम् ।
यौधिष्ठिरा धार्तराष्ट्राश्च योधाः
शस्त्रैः कृत्ता विविधैः सर्व एव ॥ २८ ॥
त्वत्तेजसा निहता नूनमेते
तथाहीमे त्वच्छरीरे प्रविष्टाः ।
यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा व्रजन्ति ॥ २९ ॥
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभितो ज्वलन्ति ।
यथा प्रदीप्तं ज्वलनं पतङ्गा[2]

१ भीष्मादयः २ शलभाः ।

विशन्ति नाशाय समृद्धवेगाः ॥ ३० ॥

तथैव नाशाय विशन्ति लोका-

स्तवापि वक्त्राणि समृद्धवेगाः ।

लेलिह्यसे[1] ग्रसमानः[2] समन्ता-

ल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ॥ ३१ ॥

तेजोभिरापूर्य जगत्समग्रं

भासस्तवोग्राः प्रतपन्ति विष्णो ।

आख्याहि मे को भवानुग्ररूपो

नमोऽस्तु ते देववर प्रसीद ॥ ३२ ॥

विज्ञातुमिच्छामि भवन्तमाद्यं[3]

नहि प्रजानामि तव प्रवृत्तिम् ।

तव प्रवृत्तिं न वेद्मि—केनाशयेनेदृशीयमुग्रतेति ॥ ३२ ॥

श्रीभगवानुवाच

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो[4]

ल्लोकान्समाहर्तुमिह प्रवृत्तः ।

ऋतेऽपि त्वा न भविष्यन्ति सर्वे

---

१ अभीक्ष्णं लेढि २ स्वात्मसात्कुर्वन् ३ आ—समन्तादत्तुं प्रवृत्त इति आद्यः, यद्वा—आदौ भव आद्यस्तमित्यर्थः ४ सकललोकसंहारैकव्यापकोऽधुना त्विह—पृथिव्यां प्रवृद्धान्—मदोद्रिक्तान्पृथिवीभारभूताँल्लोकानिमान् समाहर्तुं—क्षयं नेतुं, प्रवृत्तः ।

येऽवस्थिताः प्रत्यनीकेषु[1] योधाः ॥ ३३ ॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन्[2] ॥ ३४ ॥

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि लोकवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा[3]
युध्यस्व जेतासि[4] रणे सपत्नान् ॥३५॥

तदत्र भगवतोत्तरं जगतो विद्याविद्यात्मनः शुद्धाशुद्धमिश्रसंविद्वलग्रासीकारादभिधीयते;-इति प्रायशः सूत्रितमत्राध्याये रहस्यम् उट्टङ्कितमात्रसंवित्तिसमर्थेभ्योऽस्तु । कियत्पंक्तिलेखनायासदौःस्थित्यमालम्भेमहि । अत्र यदुक्तं 'मया हतेषु त्वं निमित्तं यशस्वी भव' इति;-भगवता तत्प्रत्युक्तं, यदुक्तं प्रागर्जुनेन 'नैतद्विद्मः कतरन्नो गरीयः'-इत्यादि ॥ ३५ ॥

संजय उवाच

एतच्छ्रुत्वा वचनं केशवस्य

१ प्रतिपक्षसेनासु २ सव्येन-वामहस्तेन शरान् संचितुं-प्रयोक्तुं शीलमस्यास्तीति सव्यसाची, तस्य संबुद्धौ,-हे सव्यसाचिन् ३ व्यथां मां कुरु ४ रणे सपत्नान्-दुर्योधनादीन् शत्रून् 'जेतासि'-जेष्यसीत्यत्र न संशय इत्यर्थः ।

कृताञ्जलिर्वेपमानः[1] किरीटी[2] ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३६ ॥

अर्जुन उवाच

स्थाने[3] हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३७ ॥

प्रकीर्त्या—प्रकीर्तनेन ॥ ३७ ॥

कस्माच्चैते न नमेयुर्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश[4] जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥ ३८ ॥

सत्—पदार्थत्वेन । असत्—उपलम्भं प्रत्यविषयत्वात् । अथवा अभावोऽपि धियि निजनिजविशिष्टवाचकसंश्लेषितो ज्ञानाकारमश्नुवानो न परब्रह्मसत्ताव्यतिरिक्तः । सदसद्रूपाभ्यां च परम्,—तदुभयबुद्धितिरोधाने तद्रूपोपलब्धेः ॥ ३८ ॥

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।

---

१ कम्पमानः २ अर्जुनः ३ युक्तमित्यर्थः ४ देवाः—इन्द्रियाणि, तेषामीश—नियन्तः ।

वेत्तासि वेद्यं च परं च धाम

त्वयाततं विश्वमनन्तरूपम् ॥ ३९ ॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः

प्रजापतिस्त्वं प्रपितामहश्च ।

अनादिमानप्रति[1]मप्रभावः

सर्वेश्वरः सर्व[2]महाविभूते ॥ ४० ॥

नमो नमस्तेऽस्तु सहस्रकृत्वः

पुनश्च भूयोऽपि नमो नमस्ते ।

नमः पुरस्तादथ पृष्ठतस्ते

नमोऽस्तु ते सर्वत एव सर्व ॥ ४१ ॥

नमो नमः-इत्यनेन पौनःपुन्यं भक्त्यातिशयाविष्कारकम् यदेव भगवतातिक्रान्ताध्यायैरभ्यधायि स्वस्वरूपं; तदेवार्जुनः प्रत्यक्षोपलम्भविषयापन्नं स्तोत्रद्वारेण प्रकटयतीति तद्व्याख्यानं केवलं पौनरुक्त्यप्रसङ्गायेति विरम्यते ॥ ४१ ॥

नहि त्वदन्यः कश्चिदपीह देव

लोकत्रये दृश्यतेऽचिन्त्यकर्मा ।

अनन्तवीर्योऽमितविक्रमस्त्वं

सर्वं समाप्नोषि ततोऽसि सर्वः ॥४२॥

---

१ अनन्यसामान्यमाहात्म्यः २ सर्वेभ्य ऐश्वर्यगुणयुक्तेभ्यो महती-प्रकृष्टा विभूतिः-शक्तिविजृम्भा यस्य तथाविध हे भगवन् ।

सखेति मत्वा प्रसभं यदुक्तो
हे कृष्ण हे यादव हे सखे च ।
अजानता महिमानं तवेमं
मया प्रमादात्प्रणयेन वापि ॥ ४३ ॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत तत्समक्षं
तत्क्षामये[1] त्वामहमप्रमेयम् ॥ ४४ ॥

पितासि[2] लोकस्य चराचरस्य
त्वमस्य विश्वस्य गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिम[3]प्रभावः ॥ ४५ ॥

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियस्यार्हसि देव सोढुम्[4] ॥ ४६ ॥

---

१ क्षमस्वेति प्रार्थये २ 'यतो वा इमानि भूतानि जायन्ते' इति श्रवणात् त्वं सर्वेषां भूतानां जनयितेत्यर्थः ३ प्रतिमीयतेऽनयेति प्रतिमा-सादृश्यं न विद्यते यस्यासावप्रतिमः, तादृक्प्रभावो यस्य सः ४ क्षन्तुमर्हसीत्यर्थः ।

दिव्यानि कर्माणि तवाद्भुतानि

पूर्वाणि पूर्वे ऋषयः स्मरन्ति ।

नान्योऽस्ति कर्ता जगतस्त्वमेको

धाता विधाता च विभुर्भवश्च ॥ ४७ ॥

तवाद्भुतं किं नु भवेदसह्यं

किं वा शक्यं परतः कीर्तयिष्ये ।

कर्तासि सर्वस्य यतः स्वयं वै

विभो ततः सर्वमिदं त्वमेव ॥ ४८ ॥

अत्यद्भुतं कर्म न दुष्करं ते

कर्मोपमानं नहि विद्यते ते ।

न ते गुणानां परिमाणमस्ति

न तेजसो नापि बलस्य नर्द्धेः ॥ ४९ ॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा

भयेन च प्रव्यथितं मनो मे ।

---

१ पूर्वे—पुरातना अपि ऋषयस्तव कर्माणि स्मरन्त्यत एव तेषामृषीणामपि तानि पूर्वाणीति जगत्सर्गप्रलयादीनां भगवत्कर्मणामनादिप्रबन्धप्रवृत्तत्वप्रतिपादनपरमेतत् पूर्वं व्याख्यातप्रायम्; अन्यत्सुबोधम् । किंतु 'धाता'—धारयिता 'विधाता'—स्रष्टा, तव स्रष्टव्यः संसारः किम् 'अद्भुतम्'—आश्चर्यरूपं कर्म स्वेच्छामात्रोपकरणस्यैकस्य कर्तुस्तवासह्यम् । अत एव सहकार्यादिनिरपेक्षत्वात्परतः स्वात्मव्यतिरिक्तात्कुतश्चिच्छक्यं—साध्यम्, किं वा ते कथयिष्यामि । इत्थं चानन्यापेक्षतया यतस्त्वं सर्वस्य वस्तुजातस्य निर्माता, ततो हेत्वन्तराभावात् त्वमेवेदं सर्वं;—स्वच्छाशक्तिरेवेत्थं चकास्तीत्यर्थः ।

तदेव[1] मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ५० ॥
किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ५१ ॥

श्रीभगवानुवाच

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ५२ ॥
न वेदयज्ञाधिगमैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्यमहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ५३ ॥
मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरम्[2]ीदृङ्ममेदम् ।

१ प्राक्तनमेव सौम्यं कार्ष्णं रूपं मे-मह्यं दर्शय-दृष्टिविषयं कुर्वित्यर्थः
२ घोरं-कालपुरुषाद्याकृतियोगात्, उग्रं-संहारादिकर्मणा

व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ५४ ॥

संजय उवाच

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५५ ॥

अर्जुन उवाच

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥५६॥

सकलोपसंहारान्ते परमप्रशान्तरूपां ब्रह्मतत्त्वास्थितिं ददाति ;- इत्युपसंहारे भगवतः सौम्यता ॥ ५६ ॥

श्रीभगवानुवाच

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥५७॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५८ ॥
भक्त्या त्वनन्यया शक्यो ह्यहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ ५९ ॥
मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।

निर्वैरः सर्वभूतेषु[1] यः स मामेति पाण्डव ॥ ६० ॥

अविद्यमानान्यज्ञेयरमणीया येषां भक्तिः परिस्फुरति, तेषां 'मां प्रपद्यते, वासुदेवः सर्वम्' इत्यादिपूर्वाभिहितोपदेशचमत्कारात् विश्वात्मकं वासुदेवतत्त्वमयत्नत एव बोधपदवीमवतरतीति शिवम् ॥६०॥

अत्र संग्रहश्लोकः

शुद्धाशुद्धविमिश्रोत्थसंविदैक्यविमर्शनात् ।
भूर्भुवःस्वस्त्रयं पश्यन्समत्वेन समो मुनिः ॥ ११ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे एकादशोऽध्यायः ॥ ११ ॥

---

अथ

## द्वादशोऽध्यायः

अर्जुन उवाच

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

एवम्—उक्तेन नयेन ये सेश्वरब्रह्मोपासकाः, ये च केवलमात्ममात्रमुपासते; तेषां विशेषाख्यानाय प्रश्नः ॥ १ ॥

श्रीभगवानुवाच

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

---

[1] यो हि चराचरेषु सर्वभूतेषु निरतिशयानन्दनिर्भरं मत्स्वरूपमेव सततमनुभवति स मामेव स्वात्मरूपं प्राप्नोतीत्यर्थः ।

माहेश्वर्यविषयो येषां समावेशः-अकृत्रिमस्तन्मयीभावः, ते युक्ततमा मम मताः-इत्यनेन प्रतिज्ञा क्रियते ॥ २ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहभृद्भिरवाप्यते ॥ ५ ॥

ये पुनरक्षरं ब्रह्मोपासते आत्मानं सर्वत्रगम्-इत्यादिभिर्विशेषणैरात्मनः सर्वे ईश्वरधर्मा आरोप्यन्ते । अतो ब्रह्मोपासका अपि मामेव यद्यपि यान्ति, तथाप्यधिकतरस्तेषां क्लेशः । आत्मनि किलापहतपाप्मत्वादिगुणाष्टकारोपं[1] विधाय पश्चात्तमेवोपासते इति स्वतःसिद्धगुणग्रामगरिमणि ईश्वरेऽयत्नसाध्ये स्थितेऽपि द्विगुणमायासं विन्दन्ति ॥ ५ ॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

---

१ य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प इति ( छा० उ० )

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।**
**निवत्स्यसि त्वं मय्येव योगमुत्तममास्थितः ॥ ८ ॥**

प्रागुक्तोपदेशेन तु ये सर्वं मयि संन्यस्यन्ति, तेषामहं समुद्धर्ता;–सकलविघ्नादिक्लेशेभ्यः[1] । चेतस आवेशनं व्याख्यातम् । तथा च एष एवोत्तमो योगोऽकृत्रिमत्वात् । तथा च मम स्तोत्रे—

'विशिष्टकरणासनस्थितिसमाधिसंभावना-
विभावितता यदा कमपि बोधमुल्लासयेत् ।
न सा तव सदोदिता स्वरसवाहिनी या चिति-
र्यतस्त्रितयसंनिधौ स्फुटमिहापि संवेद्यते ॥
यदा तु विगतेन्धनः स्ववशवर्तितां संश्रय-
न्नकृत्रिमसमुल्लसत्पुलककम्पबाष्पानुगः ।
शरीरनिरपेक्षतां स्फुटमुपाददानाश्रितः
स्वयं झगिति बुध्यते युगपदेव बोधानलः ॥
तदैव तव देवि तद्वपुरुपाश्रयैर्वर्जितं
महेशमवबुध्यते विवशपाशसंक्षोभकम् '॥

इत्यादि ॥ ८ ॥

**अथावेशयितुं चित्तं न शक्नोषि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥ ९ ॥**

तीव्रतरभगवच्छक्तिपातं चिरतरप्रसादितगुरुचरणानुग्रहं च विना दुर्लभ आवेशः,–इत्यभ्यासः ॥ ९ ॥

**अभ्यासेऽप्यसमर्थः सन्मत्कर्मपरमो[2] भव ।**

---

१ 'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' इत्युक्तेः २ एवं तत्समावेशपल्लवा एव च प्रसिद्धदेहादिप्रमातृभागप्रह्वीभावभावनानुप्राणिताः परमेश्वरस्तुतिप्रणामपूजाध्यानसमाधिप्रभृतयः कर्मप्रपञ्चा इत्यभिप्रायः ।

**मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥**

अभ्यासोऽपि न शक्यते–विघ्नाद्यभिभवात् । अतस्तन्नाशाय कर्म–पूजाजपस्वाध्यायहोमादीन् कुरु ॥ १० ॥

**अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥**

यदि च भगवत्कर्म कर्तुं न शक्नोऽसि;–अज्ञत्वात् शास्त्रोक्तक्रमावेदनात् । तत्सर्वं मयि संन्यसेः आत्मनिवेदनद्वारेणेत्याशयः । अमुमेवाशयमाश्रित्य लघुप्रक्रियायां मयैवोक्तं;—

'ऊनाधिकमविज्ञातं पौर्वापर्यविवर्जितम् ।
यच्चावधानरहितं बुद्धेर्विस्खलितं च यत् ॥
तत्सर्वं मम सर्वेश भक्तस्यार्तस्य दुर्मतेः ।
क्षन्तव्यं कृपया शंभो यतस्त्वं करुणापरः ॥
अनेन स्तोत्रयोगेन तवात्मानं निवेदये ।
पुनर्निष्कारणमहं दुःखानां नैमि पात्रताम्' ॥

इति । पारमेश्वरेषु हि सिद्धान्तशास्त्रेषु आत्मनिवेदनेऽयमेवाभिप्रायः ॥ ११ ॥

तदिदं तात्पर्यमुपसंह्रियते—

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरा ॥ १२ ॥**

ज्ञानम्–आवेशात्म, अभ्यासाच्छ्रेयः—अभ्यासस्य तत्फलत्वात् । तस्मादेवावेशात् ध्यानं–भगवन्मयत्वं विशिष्यते–विशेषत्वं याति;–अभिमतप्राप्त्या । सति ध्याने– भगवन्मयत्वे कर्मफलानि संन्यसितुं युज्यन्ते । अन्यथाज्ञातरूपे क्व संन्यासः ।

कर्मफलत्यागे च आत्यन्तिकी शान्तिः । अतः सर्वमूलत्वादा-वेशात्मकं ज्ञानमेव प्रधानम् ॥ १२ ॥

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥

मैत्री–अमत्सरता यस्यास्तीति । एवं करुणः । 'ममामी'–इत्यादिः ममकारः, 'अहमुदारोऽहं तेजस्वी अहं सहनः'–इत्यादिः अहंकारः ;– एतौ यस्य न स्तः । क्षमा–अपकारिणं शत्रुं प्रत्यद्वेषबुद्धिः ॥ १३ ॥

सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥

सततं योगी–व्यवहारावस्थायामपि प्रशान्तान्तःकरणत्वात् ।१४।

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भफलत्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥

यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।
शुभाशुभफलत्यागी भक्तिमान्यः स मे प्रियः ॥ १७॥

समः शत्रौ च मित्रे च तथा मानावमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥

तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येनकेनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥
ये तु धर्मामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

अनिकेतः–'इदमेव मया कर्तव्यम्'–इति यस्य नास्ति प्रतिज्ञा । यथाप्राप्तदैवाकितया सुखदुःखादिकमुपभुञ्जानः परमेश्वरविषयसमावेशितहृदयः सुखेनैव प्राप्नोति परमकैवल्यमिति शिवम् ॥ २० ॥

अत्र संग्रहश्लोकः

परमानन्दवैवश्यसञ्जातावेशसंपदः ।
स्वयं सर्वास्ववस्थासु ब्रह्मसत्ता ह्ययत्नतः ॥ १२ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे द्वादशोऽध्यायः ॥ १२ ॥



अथ

# त्रयोदशोऽध्यायः

अर्जुन उवाच

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ १ ॥

क्वचिच्छ्रुतौ 'क्षेत्रज्ञ उपास्यः'–इति श्रूयते । स च किमात्मा,

---

१ 'विजानन्विद्वान् भवते नातिवादी' इति श्रुतेः, अन्यत्रापि–'जड इव विचरेदवादमतिः' इति ।

उतेश्वरः, अथ तृतीयः कश्चिदन्य एव ? इति प्रश्नाशङ्कायां श्रीभगवानादिशति—

श्रीभगवानुवाच

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेद तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ २ ॥
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ ३ ॥

संसारिणां शरीरं क्षेत्रं, यत्र कर्मबीजप्ररोहः । अत एव तेषामात्मा आगन्तुककालुष्यरूषितः क्षेत्रज्ञ उच्यते । प्रबुद्धानां तदेव क्षेत्रम् । अन्वर्थभेदस्तु तद्यथा—क्षिणोति कर्मबन्धमुपभोगेन, त्रायते जन्ममरणभयादिति । तांश्च प्रति परमात्मा वासुदेवः क्षेत्रज्ञः, एतत्क्षेत्रं यो वेद—वेदयति इत्यन्तर्भावितण्यर्थो विदिः । तेन यत्प्रसादादचेतनमिदं चेतनीभावमायाति स एव क्षेत्रज्ञो नान्यः कश्चित् । विशेषस्तु परिमितव्याप्तिकं रूपमालम्ब्य आत्मेति भण्यते, अपरिच्छिन्नसर्वक्षेत्रव्याप्त्या परमात्मा भगवान्वासुदेवः[1] । ममेति कर्मणि षष्ठी ;—अहमनेन ज्ञानेन ज्ञेय इत्यर्थः ॥ ३ ॥

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ४ ॥
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम्[2] ॥ ५ ॥

---

१ वासुदेवाख्य इति ग० पाठः २ अनेन वक्ष्यमाणस्य क्षेत्रादिप्रतिपादकस्यार्थस्य वेदवेदान्तस्मृतिप्रसिद्धत्वं प्रकाशितम् ।

येन विकारं गच्छति यद्विकारि । समासेन—इत्यविभागेनैवै-तान्प्रश्नान् साधारणोत्तरेण परिच्छिनत्ति । यद्यपि च ऋषिभिर्बहुधा वेदैश्चोक्तमेतत्, तथापि समासेनाहं व्याचक्ष इति ॥ ५ ॥

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ६ ॥
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ७ ॥

अव्यक्तं—प्रकृतिः । इन्द्रियाणि—मनसा सहैकादश । इन्द्रियगो-चराः—रूपादयः पञ्च ॥ ६ ॥ चेतना—दृक्शक्तिः पुरुषः । धृतिरिति अन्ते किल सर्वस्य—आ ब्रह्मणः क्रिमिपर्यन्तस्य प्रारब्धे निष्पन्ने वा कार्ये कामक्रोधादिषु च 'इयतैव मम पर्याप्तं किमन्येन, ईदृशश्चाहं नित्यमेव भूयासम्'—इति प्राणसंधारिणी धृतिराश्वास-नात्मिका पररहस्यशासनेषु रागशब्दवाच्या जायते ॥ ७ ॥

एवं क्षेत्रं व्याख्यातं, क्षेत्रज्ञश्च । इदानीं ज्ञानमुच्यते—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ८ ॥
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ९ ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ १० ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।

विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ ११ ॥

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।

एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ १२ ॥

अनन्ययोगेनेति—'परमात्मनो महेश्वरादन्यदपरं न किंचिदस्ति'—इत्यनन्यरूपो यो निश्चयः, स एव योगः;—तेन निश्चयेन मयि भक्तिः । अत एव सा न कदाचिद्व्यभिचरति,—व्यभिचारहेतुत्वाभिमतानां कामनानामभावात् , तासामपि वा चित्तवृत्त्यन्तररूपाणां तदेकमयत्वात् । एवं सर्वत्रानुसंधेयम् एतद्विपरीतमज्ञानम् ; यथा मानित्वादीनि ॥ १२ ॥

एतेन ज्ञानेन यज्ज्ञेयं तदुच्यते—

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।

अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १३ ॥

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।

सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १४ ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।

असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १५ ॥

बहिरन्तश्च भूतानामचरं चरमेव च ।

सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १६ ॥

अविभक्तं विभक्तेषु विभक्तमिव च स्थितम् ।

भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १७ ॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १८ ॥

'अनादिमत्परं ब्रह्म'-इत्यादिभिर्विशेषणैर्ब्रह्मस्वरूपाक्षेपानुग्राहकं सर्वप्रवादाभिहितविज्ञानापृथग्भावं कथयति । एतानि च विशेषणानि पूर्वमेव व्याख्यातानीति किं निष्फलया पुनरुक्त्या ॥ १८ ॥

एतत्क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १६ ॥

एतत्क्षेत्रज्ञानज्ञेयात्मकं त्रयं यो वेत्ति, स एव मद्भक्तः । स च मद्भावमेति ॥ १६ ॥

एतल्लक्षणं कृत्वा परीक्षा क्रियते—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ २० ॥

प्रकृतिरप्यनादिः—कारणान्तराभावात् । विकाराः—पटादयः ।२०

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २१ ॥

प्रकृतिरिति कार्यकारणभावे हेतुः । पुरुषस्तु प्राधान्याद्धोक्ता ।२१

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २२ ॥

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २३ ॥

* अत एवास्य शास्त्रकृद्भिर्नानाकारैर्नामभिरभिधीयते रूपम्–'उपद्रष्टा'—इत्यादिभिः । अयमत्र तात्पर्यार्थः । प्रकृतिः, तद्विकारश्चतुर्दशविधः सर्गः तथा पुरुषः,–एतत्सर्वमनादि नित्यं च, ब्रह्मतत्त्वाच्छुरितत्वे सति तदनन्यत्वात् ॥ २३ ॥

तथा चाह—

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २४ ॥

एवम्–अनेन सर्वाभेदरूपेण ब्रह्मदर्शनेन यो योगी प्रकृतिं, पुरुषं गुणांश्च तद्विकारान् जानाति । सर्वेण प्रकारेण यथातथा वर्तमानोऽपि, स मुक्त एवेत्यर्थः ॥ २४ ॥

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २५ ॥
अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २६ ॥

ईदृशं च ज्ञानं प्रधानं कैश्चिदात्मतया उपास्यते । अन्यैः प्रागुक्तेन सांख्यनयेन । अपरैः कर्मणा । इतरैरपि स्वयमीदृशं ज्ञानमजानद्भिरपि श्रवणप्रवणैर्यथाश्रुतमेवोपास्यते । तेऽपि मृत्युं–संसारं तरन्ति । येनकेनचिदुपायेन भगवत्तत्त्वमुपास्यमानमुत्तारयति । अतः सर्वथैवमासीतेत्युक्तम् ॥ २६ ॥

यावत्किञ्चित्संभवति सत्त्वं स्थावरजङ्गमम् ।

* 'प्रकृतिपुरुषयोः पङ्ग्वन्धवत्किलान्योन्यापेक्षा वृत्तिः' इति पुस्तकान्तरेऽधिकः पाठः ॥

क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २७ ॥

यत्किंचित् चरमचरं च तत्सर्वं क्षेत्रज्ञातिरेकि न संभवतीति । २७ ।

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।

विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २८ ॥

अत एव

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।

न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २९ ॥

सर्वत्रैव समबुद्धिर्योगी आत्मानं न हिनस्ति—दुस्तरे संसारार्णवे न पातयति ॥ २९ ॥

प्रकृत्यैव हि कर्माणि क्रियमाणानि सर्वशः ।

यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ ३० ॥

यस्य हि ईदृशी स्थिरतरा बुद्धिर्भवति ;—'प्रकृतिरेवेदं करोति, नाहं किंचित्' स सर्वं कुर्वाणोऽपि न करोति । एवमकर्तृत्वम् । ३० ।

यदि वा

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।

तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३१ ॥

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।

शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३२ ॥

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।

सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३३ ॥

विस्तीर्णत्वेन सर्वव्याप्त्या यदा भूतानां पृथक्त्वं–भिन्नताम् आत्मन्येव पश्यति, आत्मन एव चोदितां तां मन्यते । तदापि सर्वकर्तृत्वान्न लेपभाक् । यतोऽसौ परमात्मैव शरीरस्थोऽपि न लिप्यते–आकाशवत् ॥ ३३ ॥

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३४ ॥**

ननु एकः परमात्मा कथमनेकानि क्षेत्राणि व्याप्नोति ?–इत्याशङ्का प्रसिद्धेन रविणा दृष्टान्तेनापाकृता । कृत्स्नं क्षेत्रं–चराचराणि क्षेत्राणीत्यर्थः ॥ ३४ ॥

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३५ ॥**

एवमध्यायेन यदुक्तं ज्ञेयं, ज्ञानं, क्षेत्रक्षेत्रज्ञयोरन्तरं, भूतप्रकृतेश्च स्वल्पात्परिणामधर्मत्वान्मोचनं, तत् ये ज्ञानलक्षणेन सर्वत्राप्रतिहतेनालौकिकेन चक्षुषा पश्यन्ति ते वासुदेवतां प्राप्य लभन्त एव परमं शिवमिति शिवम् ॥ ३५ ॥

अत्र संग्रहश्लोकः

पुमान्प्रकृतिरित्येष भेदः संमूढचेतसाम् ।
परिपूर्णास्तु मन्यन्ते निर्मलात्ममयं जगत् ॥ १३ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते
श्रीमद्भगवद्गीतार्थसंग्रहे त्रयोदशोऽध्यायः ॥ १३ ॥

अथ

# चतुर्दशोऽध्यायः

श्रीभगवानुवाच

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

यदेव पूर्वोक्तं ज्ञानं, तदेव पुनः प्रकर्षेण प्रत्येकं गुणस्वरूपनिरूपणया वैतत्येन वक्ष्यामि । यज्ज्ञात्वा-इत्यनेनास्य ज्ञानस्य दृष्टप्रत्ययतां प्रसिद्धिं चाह ॥ १ ॥

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**

व्यथन्तीति-[1]च्छान्दसत्वात्तिङ्प्रत्ययः । एवमन्यत्रापि सुप्तिङ्प्रत्यये वाच्यम् ॥ २ ॥

तत्रादौ संसृतौ क्रममाह—

**[2]मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।**
**संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥**

ज्ञातव्ये ज्ञाते तत्कारणे च, सुकरं हि ज्ञानम् । मम-तावद्व्यपदेश्यपरमानन्दरूपस्य महद्ब्रह्म-बृंहकात्मीयशक्तिरूपं ब्रह्म । आ-

---

१ व्यथधातोरनुदात्तेत्त्वादात्मनेपदेन भाव्यमित्यत आह  २ मम-परब्रह्मस्वरूपस्य, महत्-स्थूलं यतो वेद्यतया परामृश्यमानं, गर्भं-संविल्लक्षणस्ववीर्यसंक्रान्तिम् । अयं भावः ;-परब्रह्मस्वरूपं परामृशन् प्रकृतिलक्षणं तत्त्वमवभासयामि ; तस्येदन्तायामपि चित्प्रकाशानुप्रवेशं विना प्रकाशमानत्वाभावात् ब्रह्मस्वरूपत्वं, व्यवच्छिन्नवेद्यस्वरूपत्वात् तु स्थूलत्वम्, इति सकलजगद्भावभेदैकहेतुभूतेदन्तात्मकं महद्ब्रह्म मम-जगत्सिसृक्षारसिकस्य योनिस्थानीयमित्यन्यत्र ।

त्मीयामेव हि विमर्शशक्तिमालम्ब्याहमनादीनात्माणून् अनुग्रहार्थं संसारयामि ॥ ३ ॥

अत एव—

**सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥**

सर्वासु योनिषु आदिकारणतया बृंहिका भगवच्छक्तिः—सकलसंसारवमनस्वभावा माता । पिता त्वहं—शक्तिमानव्यपदेश्यः ।४।

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥**

देही चायमात्मतया सत्त्वरजस्तमोभिर्धर्मैरपवर्गपर्यन्ताय भोगाय निबध्यते ॥ ५ ॥

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥**

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥**

क्रमेणैषां रूपमुच्यते । सत्त्वं—निर्मलम् । तृष्णा सङ्गस्य समुद्भवो यतः ॥ ७ ॥

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥**

दुर्लभस्यापि चिरतरसञ्चितपुण्यशतलब्धस्यापवर्गप्राप्तावेककारणस्य मानुष्यकस्य वृथातिवाहनं—प्रमादः । तथाह्युक्तं—

'आयुषः क्षण एकोऽपि सर्वरत्नैर्न लभ्यते ।
स वृथा नीयते येन स प्रमादी नराधमः ॥'

इति । आलस्यं–शुभकरणीयेषु । निःशेषेण द्राणम् कुत्सिता गतिः–निद्रा ॥ ८ ॥

**सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।**
**ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥**

सञ्जयति–योजयति ॥ ९ ॥

**रजस्तमश्चाभिभूय सत्त्वं भारत वर्धते ।**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥**

रजस्तमसी अभिभूय सत्त्वं वर्धते । रजस्तु सत्त्वतमसी । तमः सत्त्वरजसी । उक्तं हि

'अन्योन्याभिभवेन गुणवृद्धिः ।'

इति ॥ १० ॥

**सर्वद्वारेषु देहेऽस्मिन्प्रकाश[1]मुपजायते ।**
**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥११॥**
**लोभः प्रवृत्तिरारम्भः कर्मणामशमश्च तृट् ।**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥**
**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।**
**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥१३॥**

सर्वद्वारेषु–सर्वेन्द्रियेषु । लोभादयः क्रमेणैव रजस्युद्रिच्यमाने जायन्ते । एवमप्रकाशादयः क्रमेणैव तमोविवृद्धावाविर्भवन्ति ।१३।

---

१ 'प्रकाशं'–स्फुटम् असन्दिग्धं कृत्वेत्यर्थः ।

यदा सत्त्वे विवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥

यदा समग्रेणैव जन्मनानवरतसात्त्विकव्यापाराभ्यासात्सत्त्वं विवृद्धं भवति, तदा प्राप्तप्रलयस्य शुभलोकावाप्तिः ॥ १४ ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

एवं जन्माभ्यस्तराजसकर्मणः प्रयाणात् विमिश्रोपभोगाय मानुष्यावाप्तिः । तथा—तेनैव क्रमेण यदा समग्रेण जन्मना तामसमेव कर्माभ्यस्यते तदा नरकतिर्यग्वृक्षादिदेहेषूत्पद्यते । ये तु व्याचक्षते—'मरणकाल एव सत्त्वादौ विवृद्धे एतानि फलानि'—इति । ते न सम्यक्शारीरेऽनुभवे प्रविष्टाः । यतः सर्वस्यैव सर्वथान्त्ये क्षणे मोह एवोपजायते । अस्मद्व्याख्यायां च संवादीनीमानि श्लोकान्तराणि ॥ १५ ॥

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ जायेते तमसोऽज्ञानमेव च ॥ १७ ॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८ ॥

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।

गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥

गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।

जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

अत्र केचिदसंबद्धाः श्लोकाः कल्पिताः, पुनरुक्तत्वात्ते त्याज्या एव । एतद्गुणातीतवृत्तिस्तु मोक्षायैव कल्पते ॥ २० ॥

ननु यदि अयं देही, तत्कथं गुणातीतो भवति । सर्वथैव हि कयाचिच्चित्तवृत्त्या वर्तते, सा च त्रैगुण्यादन्यतमा अवश्यं भवति?—अनेनाभिप्रायेण पृच्छति अर्जुनः

अर्जुन उवाच

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।

किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥

अत्रोत्तरं— श्रीभगवानुवाच

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।

न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥

यद्यपि प्रकाशादिकाः सर्वेषु धर्मेषु वर्तन्ते, तथापि योगिनस्तेषु प्रकाशादिषु न रज्यन्ते, नापि द्वेषवन्तो भवन्ति । अपितु केवलपिण्डधर्मतयैते स्थिताः, न मां क्षोभयितुमलम्—इति मन्वाना गुणातीता भवन्ति ॥ २२ ॥

अत एवाह—

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।

गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥

समदुःखसुखस्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥२४॥
मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भफलत्यागी गुणातीतः स उच्यते ॥ २५ ॥

यः अज्ञो निर्विवेकस्तिष्ठति स एव ज्ञः,–सम्यग्ज्ञानात् । तथा हि । नेङ्गते–न स्वरूपाच्च्यवते । अत्र चोपायः–शरीरेन्द्रियादिस्वभाव एष यत्प्रवर्तनम्, नतु फलं किंचिदहमभिसन्दध इति स्थिरा बुद्धिः ॥ २५ ॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ २६ ॥

अनेन मूलभूतमुपायमुपदिशति, मां चेति । चशब्दोऽवधारणे, यो मामेव सेवते । अनेन–फलादिसाकाङ्क्षो मामङ्गत्वेनाश्रयति, फलं प्रधानतया–इति निरस्तः । अत एव नास्याव्यभिचारिणी भक्तिः–फलं प्रति ह्यसावास्थावानिति । यस्तु फलं किंचिदप्यनभिलष्यन् 'किमेतदलीकमनुतिष्ठसि'–इति पर्यनुयुज्यमानोऽपि, निरन्तरभगवद्भक्तिवेधविद्रुतान्तःकरणतया कण्टकितरोमवान् वेपमानतनुर्विस्फारितनयनयुगलपरिवर्तमानसलिलसंपातः तूष्णींभावेनैवोत्तरं प्रयच्छति । स एवाव्यभिचारिण्या भगवतो महेश्वरस्याग्रशक्त्या भक्त्या पवित्रीकृतो नान्य इति ज्ञेयम् ।२६।

ब्रह्मणो[1] हि प्रतिष्ठाहममृतस्याव्ययस्य च ।

१ अनेन हि सद्रूपस्य ब्रह्मणः परमानन्दस्य विश्रान्तिस्थानमहमिति विमर्शात्मकमुक्तम्.

**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७॥**

अहमेव हि ब्रह्मणः प्रतिष्ठा । मयि सेव्यमाने ब्रह्म भवति ; अन्यथा जडरूपतया ब्रह्म उपास्यमानं मोक्षमपि सौषुप्तादविशिष्टमेव प्रापयेदिति शिवम् ॥ २७ ॥

अत्र संग्रहश्लोकः

लसद्भक्तिरसावेशहीनाहंकारविभ्रमः ।
स्थितेऽपि[1] गुणसंमर्दे गुणातीतः समो यतिः ॥ १४॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे चतुर्दशोऽध्यायः ॥ १४ ॥

---

अथ

## पञ्चदशोऽध्यायः

श्रीभगवानुवाच

**ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥**

अनेन शास्त्रान्तरेषु यदुच्यते–'अश्वत्थः सर्वं, स एवोपासनीयः'–इत्यादि, तस्य भगवद्ब्रह्मोपासा तात्पर्यमित्युच्यते । मूलं–प्रशान्तं रूपम् । तत् ऊर्ध्वं–सर्वतो हि निवृत्तस्य तदाप्तिः । छन्दांसि पर्णानीति ;–यथा वृक्षस्य मानलफलवत्त्वसरसतादयः पर्णैः सूच्यन्ते, एवं ब्रह्मतत्त्वस्य वेदोपलक्षितशास्त्रद्वारिका प्रतीतिरित्याख्यायते ॥ १ ॥

---

१ स्थितोऽपि इति ख० पाठः

अधश्चोर्ध्वं प्रसृता यस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥
न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण शितेन छित्त्वा ॥ ३ ॥
ततः पदं तत्परिमार्गितव्यं
यस्मिन्गता न निवर्तंति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये-
द्यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥
निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥

गुणैः—सत्त्वादिभिः । प्रवृद्धाः—देवादिस्थावरान्ततया । तस्य च शुभाशुभात्मकानि कर्माणि अधस्तनमूलानि । तं छित्त्वेति—विशेष्ये क्रियाभिधीयमाना सामर्थ्यादत्र विशेषणपदमुपादत्ते 'दण्डी प्रैष्यानन्नुब्रूयात्'—इति विधिवत् । तेनाधोरूढानि मूला-

न्यस्य च्छिन्द्यादिति । तत्-पदं-प्रशान्तम्, अव्ययं पदं तदेव ॥ ५ ॥

**न[1] तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥**

सूर्यादीनां तत्रानवकाशः । तेषां कालाद्यवच्छेदात्, वेद्यत्वात्, करणोपकारकत्वात् । तस्य तु दिक्कालाद्यनवच्छेदात्, वेदकत्वात्, करणप्रवर्तकत्वात्-तदतीतत्वात् ॥ ६ ॥

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**

ब्रह्मण एवायमंश इति । अज्ञानधर्मतया परिपूर्णस्यासंवेदनाच्चेतनतानिवृत्तेश्चांशत्वमुपचरितं, न पुनर्वस्तुतोंऽशवत्तोपपद्यते—

'प्रदेशोऽपि[2] ब्रह्मणः सार्वरूप्यमनतिक्रान्तः ।' ( अविकल्प्यश्च )

इति हि श्रुतिः । एषैव चौपचारिकता यथावसरं योजनीयेति न विप्रतिपत्तव्यम् ॥ ७ ॥

---

१ तत्परमं धाम स्वाभासत्वात् सूर्याद्यवभास्यो न भवति; प्रत्युत सूर्यादीनां प्रकाश्यत्वात् तत्प्रकाशमन्तरेण प्रकाशमानतैव न स्यात् । तस्मात्पर एव प्रकाशः तत्तत्सूर्याद्यात्मना प्रस्फुरेदिति भावः । उपहितस्वरूपत्वादेव सूर्यादिप्रकाशः स्वप्रकाशने संवित्प्रकाशमपेक्षते । तदुक्तमाचार्यपादैरेव श्रीतन्त्रालोके—

"सूर्यादिषु प्रकाशोऽसावुपाधिकलुषीकृतः ।
संवित्प्रकाशं माहेशमत एव ह्यपेक्षते ॥"

इति । संविच्छब्देनात्र जडात् सूर्यादिप्रकाशात् परस्य प्रकाशस्य वैलक्षण्यं प्रदर्शितम्

२ एतद्वेदान्तवादिवचसा संवादयति-'प्रदेशोऽपि' इति । यथा घटाकाशं पटाकाशमित्याकाशस्य घटादियोगेन कल्पिताः प्रदेशा आकाशस्य यावद्रूपं विभुत्वादि तेनानूनाधिकाः, एवं ब्रह्मणो बृहत्त्वेन व्यापकस्य बृंहकत्वेन विश्वसृष्ट्याप्यायनविधायिनः प्रकाशरूपस्य स्वशक्तिप्रत्यवभासितनीलाद्युपाधिकृता ❀

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

अवाप्नोति–गृह्णाति । उत्क्रामति–त्यजति । एतैः सह । यथा वायुः सर्वगतो विश्रान्तिधाम पार्थिवं प्राप्य ततो गन्धमानीय स्थानान्तरे तत्सहित एव संक्रामति, एवं जीवः पुर्यष्टकेन सह । एवं सृष्टौ संहारे चैतैः साहित्यमस्योक्त्वा स्थितावपि स्थानासनमननादिरूपायां विषयग्रहणात्मिकायां तत्सहितस्यैवास्य व्यापार इति निश्चीयते ॥ ८ ॥

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

तिष्ठन्तमुत्क्रामन्तं वा भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

मन इत्यनेनान्तःकरणमुपलक्ष्यते । अत एव शरीरस्थितियोगात्तिष्ठन्तम् । शरीरान्तरग्रहणाय उत्क्रामन्तम् । विषयान्वा भुञ्जानं मूढा न पश्यन्ति–अप्रबुद्धत्वात् । प्रबुद्धास्तु सर्वत्रैव बोधरूपमेवानुसन्दधाना जानन्त्येव, इत्यलुप्तसमाधयः–तेषां यत्नपरत्वात् । १० ।

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

---

※ ये प्रदेशाः–नीलप्रकाशः पीतप्रकाश इत्यादयस्ते, ब्रह्मणि यत्सार्वरूप्यं–सर्वशक्त्यविभागवृत्तित्वं, यच्च प्रकाशमानतामात्ररूपेण प्रतियोगिवैकल्यादपोहनीयाभावे विकल्परूपत्वायोगादप्रतियोगिसंवेदनरूपमविकल्पं तत्प्रत्येकमनतिक्रान्तास्ततो मनागप्यनधिकाश्च । द्वयमन्योन्यं हेतुहेतुमद्भावं द्योतयति ।

अकृतात्मनां तु यत्नोऽपि न फलाय—अपरिपक्वकषायत्वात् । नहि शरदि सलिलादिसामग्रीसंमर्देऽपि धान्यबीजानि उप्यमानानि फलसंपदेऽलम् । अत एव सामग्री एव सास्य न भवति ;—अन्यदेव किल मधुमाससंभृतजलधरपटलीप्रेरितमम्भः । काचिदेव च सा भूः, यस्यां शिशिरविवशीकृतायां रविकरस्पर्शेनैव कान्तिः । एवमकृतात्मनां यत्नो न सकलाङ्गपरिपूर्णत्वमायाति । अत एव प्राप्याप्युपायं पारमेश्वरदीक्षादि, ये तथाविधक्रोधमोहादिग्रन्थिसन्दर्भगर्भीकृतान्तर्दशः, तेषूपाय एव साकल्यं न भजतीति मन्तव्यम् । यदुक्तं—

'क्रोधादौ दृश्यमाने हि दीक्षितोऽपि न मुक्तिभाक् ।'

इति ॥ ११ ॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥
गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥
अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥

अर्कादितेजस्त्रयरूपतया दशमाध्यायसूचितसृष्टिस्थितिसंहारप्रकटीकरणे श्रीगुरवः प्राहुः—भूतपञ्चकस्य समस्तव्यस्ततया यल्लोकधारकत्वं तद्भगवत एव माहेश्वर्यमित्येतदनेन । तथाहि । रवितेजसः प्रकाशकत्वं धारकत्वं च—तेजोधराद्वयतादात्म्यात् । तदेतदुक्तं,—'यदादित्यगतम्' इति 'गामाविश्य च' इति चार्धद्वयेन ।

चान्द्रं तेजः प्रकाशकं पोषकं च;–जलतेजोयोगात् । तदुक्तं,— 'यच्चन्द्रमसि' इत्यनेन भागेन,

'पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ।'

इति चार्धश्लोकेन । वाह्नं तु तेजः प्रकाशनशोषणदहनस्वेदनपचनात्मकं–पृथिव्यप्तेजोवायुयोगात् । तदेतदिहोक्तं,–'यच्चाग्नौ' इत्यनेन, 'अहं वैश्वानरः'–इत्यनेन च । नभस्तु बोधात्रकाशरूपतया सर्वगतमेव ॥ १४ ॥

अत एव बोध्यरूपतामुक्त्वा तद्बोध्यस्वरूपपृष्ठपतितस्वातन्त्र्यबोधस्वभावमात्मानं परस्वभावं परमेश्वररूपं सर्वज्ञानस्वतन्त्रं सर्वकर्तारं दर्शयितुमाह—

सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥

सर्वस्य वेद्यस्य यत् हृत्–समस्ताहरणस्वतन्त्रबोधस्वभावं, तत्राहमिति यो विमर्शस्तत एवापूर्वाभासनामयं ज्ञानं विश्वमहासृष्टिरूपम् । 'अयं घट एव'–इति सर्वात्मकभावखण्डनासारं विकल्पज्ञानात्मकमपोहनं पाशवसृष्टिरूपमायामयप्रमातृचितम् । स्मरणं च संस्कारशेषतां नीतस्य संहृतस्य पुनरवभासनात्मकमिति इयता समस्तज्ञानानि संहृतानि । इति सर्वज्ञतापूर्वकं स्वातन्त्र्यरूपं कर्तृत्व-

१ अत्र च, मत्त इति–मत्सामर्थ्यादेतत, न ममेत्यभिप्रायः । अयं भावः– यद्बलात्तद्भवति तन्मम स्वातन्त्र्यमिति ।

मुक्तम् । सर्वैरिति–संभूय किल सर्वशास्त्राणां परमेशतत्त्वमेव नि-
रूप्यम् । वेदवेदान्तकर्तृत्वेन कर्मफलतत्संबन्धादिद्वारतया अशेष-
विश्वनिर्माणे, तदुन्मूलनेन पुनः स्वरूपप्रतिष्ठापने भगवत एव
स्वातन्त्र्यमिति विश्वकर्तृत्वमुक्तम् । अन्ये तु अपोहनम्–अनेनाकृ-
तेनेदं भवति, इति व्यतिरेकबुद्धिः । वेदान्तं करोति इत्यात्मसा-
द्भावेन । एवं वेदम् ॥ १५ ॥

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

'लोके द्वाविमौ पुरुषौ'–इति ग्रन्थेनेदमुच्यते ;–लोके तावद-
प्रबुद्धस्वभावोऽपि सर्वः पृथिव्यादिभूतारब्धशरीरमात्मानं चेतनं
क्षररूपं जानातीति लोकस्य मूढत्वाद् द्वैतधीर्न निवर्तते । अहं तु
सकलानुग्राही द्वैतग्रन्थिं विभिद्य सकललोकव्यापकतया वेद्य इति ।
क्षरमतीतः–भूतानां जडत्वात् । अक्षरमतीतः–आत्मनोऽप्रबुद्धत्वे
सर्वव्यापकत्वखण्डनात् । 'पुरुषोत्तमो लोके वेदेऽपि' स उत्तमः
पुरुषः,–इत्यादिभिर्वाक्यैः स एव परमात्माद्वय एवमुच्यते ॥१८॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

एवं जानानः सर्वमयं मामेव ब्रह्मतत्त्वमुपासीनः सर्वं मन्मयत्वेन विदन् सर्वेण भावेन—मूर्तिक्रियाज्ञानात्मकेन मामेव भजते। यत्पश्यति, तद्भगवन्मूर्तितयेत्यादि । तथा च मयैव शिवशक्त्यविनाभावस्तोत्रे—

'तव च काचन न स्तुतिरम्बिके
सकलशब्दमयी किल ते तनुः ।
निखिलमूर्तिषु मे भवदन्वयो
मनसिजासु बहिष्प्रसरासु च ॥
इति विचिन्त्य शिवे शमिताशिवे
जगति जातमयत्नवशादिदम् ।
स्तुतिजपार्चनचिन्तनवर्जिता
न खलु काचन कालकलापि मे' ॥

इति ॥ १९ ॥

**इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।**
**एतदबुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २० ॥**

गुह्यतमं—सर्वाद्वयप्रतिपादकत्वात् । एतदेव बुद्ध्वा बुद्धिमत्त्वं, नतु व्यवहारबुद्ध्या । एतेन च ज्ञातेनैव कृतकृत्यता, नतु कृतेनापि शत्रुविजयार्थाहरणस्त्र्युपभोगादिना । चकारोऽद्भुतद्योतकः । कृतेन हि कृतकृत्यता दृष्टा, एतेन तु ज्ञातेनैवेति चित्रम् । इतिशब्देन शास्त्रस्य समाप्तिः सूचिता,—वक्तव्यस्य परिपूर्णतया समाप्तत्वात् । तथाहि । षोडशाध्यायेन शिष्यस्यार्जुनस्य केवलं योग्यता प्रतिपाद्यते । नतूपदिश्यते किंचित् । 'दैवी ह्येवंविधा संपत्, आसुरी चाविद्यामय्येतादृशी संपत् । त्वं च विद्यामयीं दैवीं संपदमभिप्राप्तः'—इत्येतावति हि तात्पर्यम् । यद्वक्ष्यति 'मा शुचः संपदं दैवीम्'—इति । अत एव पूर्वं विद्याविद्यासंघट्टनिरूपणावसरे देवा-

सुरसंग्रामच्छलेन विद्याविद्ययोः संघर्ष इति सूचितम् । एवं च शिष्यस्वरूपे प्राधान्येन निरूप्यमाणे, प्रसङ्गतोऽन्यदप्युक्तम् । इत्यध्यायद्वयं भविष्यति । उपदेशस्त्वित एव परिसमाप्तः । सर्वभावेन हि परमेश्वरभजनमावेशरूपं प्राप्यम् । तदर्थं चान्यत्सर्वमित्युक्तं प्राक् । सर्वमाहेश्वरस्वरूपावेश एव हि परमं शिवमिति शिवम् ॥ २० ॥

अत्र संग्रहश्लोकः

हत्वा द्वैतमहामोहं कृत्वा ब्रह्ममयीं चितिम् ।
लौकिके व्यवहारेऽपि मुनिर्नित्यं समाविशेत् ॥ १५ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते
श्रीमद्भगवद्गीतार्थसंग्रहे पञ्चदशोऽध्यायः ॥ १५ ॥

---

अथ

# षोडशोऽध्यायः

एतद्बुद्ध्वेत्युक्तम् । बोधश्च नाम, श्रुतिमयज्ञानानन्तरं 'इदमित्थम्'—इत्येवंभूतयुक्तिचिन्ताभावनामयज्ञानोदयेन विचारविमर्शपरामर्शादिरूपेण विजातीयन्यक्कारविरहिततद्भावनामयस्वभ्यस्ताकारविज्ञानलाभे सति, भवति । यदुक्ष्यते—

'विमृश्यैवमशेषेण यथेच्छसि तथा कुरु' ॥ (१८ अ० । ६३ श्लो० ।)

इति । तत्र श्रुतिमये ज्ञाने गुरुशास्त्रे एव प्राधान्येन प्रभवतः । युक्तिचिन्ताभावनामये तु विमर्शक्षमता असाधारणा शिष्यगुणसंपत् प्रधानभूता । अतोऽर्जुनस्यास्त्येवासौ । इत्यभिप्रायेण वक्ष्यमाणं 'विमृश्यैवम्'—इति वाक्यं सविषयं कर्तुं परिकरबन्धयोजनाभिप्रायेणाह भगवान्गुरुः—

श्रीभगवानुवाच

अभयं[1] सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥
अहिंसा सत्यमक्रोधस्त्यागोऽसक्तिरपैशुनम् ।
दया भूतेष्वलौल्यं च मार्दवं[2] ह्रीरचापलम् ॥ २ ॥
तेजः क्षमा धृतिस्तुष्टिरद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥
दम्भो[3] दर्पो[4]ऽभिमानश्[5] क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥
दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥

आसुरभागसंनिविष्टा तामसी किलाविद्या । सा प्रवृद्धया दिव्यांशग्राहिण्या विद्यया बाध्यते, इति वस्तुस्वभाव एषः । त्वं च विद्यात्मानं दिव्यमंशं सात्त्विकमभिप्रपन्नः । तस्मादान्तरीं मोहलक्षणामविद्यां विहाय बाह्याविद्यात्मशत्रुहननलक्षणं शास्त्रीयव्यापारम् अनुतिष्ठ-इत्यध्यायारम्भः । तथाहि । दिव्यांशस्येमानि चिह्नानि तानि स्फुटमेवाभिलक्ष्यन्ते दमः-इन्द्रियजयः । चापलं-पूर्वापरम-

---

१ सर्वतः कुतश्चिच्चेतनाचेतनरूपाद्भावजाताद्यथोक्ताद्भयज्ञानप्रातिष्ठितबुद्धित्वे सति आत्माभेदेन प्रतिपाद्यमानाद्भयस्य-आत्मव्यतिरिक्तपदार्थाश्रयस्य प्रेप्सितविषयाप्राप्तिविघातादिहेतोः साध्वसस्याभावः २ चित्तस्य काठिन्यराहित्यं शीतलता
३ परवञ्चनार्थं विहितानुष्ठानम् ४ स्वगुणसंभावनया हर्षमोहात्मकचित्तविकारः ।
५ स्वस्मिन्नेवोत्कृष्टत्वबुद्धिरभिमानः ।

विमृश्य यत्करणं, तदभावोऽचापलम् । तेजः–आत्मन्युत्साहग्रहणेन मितत्वापाकरणम् । दैवी संपदेषा । सा च तव विमोक्षाय;–कामनापरिहारात् । अतस्त्वं शोकं मा प्रापः । यथा–'आत्रादीन् हत्वा सुखं कथमश्नुवीय'–इति । शिष्टं स्पष्टम् ॥ ५ ॥

द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरतः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥

एषा दैवी संपदुक्ता 'अभयमित्यादिना' । आसुरीमाह

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥

प्रवृत्तिः–कुत इदमुत्पन्नमिति । निवृत्तिः–क्व प्रलीयते इति ॥ ७ ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतमकिंचित्कमहेतुकम् ॥ ८ ॥

न किंचित् दृष्टादन्यत् कार्यं विद्यते यत्रेति–अकिंचित्कम् ॥ ८ ॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽशुभाः ॥ ९ ॥

काममाश्रित्य दुष्पूरं दम्भलोभमदान्विताः ।
असद्ग्रहाश्रिताः क्रूराः प्रचरन्त्यशुचिव्रताः ॥ १० ॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।

ईहन्ते कामभोगार्थानन्यायेनार्थसञ्चयान् ॥ १२ ॥

चिन्ता तेषां प्रलयान्ता—अविरतं संसृतिप्रलयाभ्युपरमात् । एतावदिति–कामोपभोग एव परं कृत्यं, तन्नाशाच्च परं क्रोधः । अत एवाह ' कामक्रोधपरायणाः '–इति ॥ १२ ॥

इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्ये इत्यज्ञानविमोहिताः ॥ १५ ॥

अनेकचित्ता विभ्रान्ता मोहस्यैव वशं गताः ।
प्रसक्ताः कामभोगेषु पतन्ति निरयेऽशुचौ ॥ १६ ॥

अनेकचित्ता इति—निश्चयाभावात् । अशुचौ निरये–अवीच्यादौ, जन्ममरणसन्ताने च ॥ १६ ॥

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

यज्ञैर्यजन्ते नाम–निष्फलमित्यर्थः । क्रोधेन हि सर्वं नश्यतीत्यर्थः । यद्वा । नामयज्ञैः–संज्ञामात्रेणैव ये यज्ञास्तैः । अ-

थवा । नामार्थ-प्रसिद्धयर्थं ये यज्ञाः ; येन 'यज्ञयाज्ययम्'-इति व्यपदेशो जायते । ते दम्भपूर्वका एव, नतु फलन्ति । क्रोधादिरूषितत्वादेव लोकान्द्विषन्तो मामेव द्विषन्ति । अहं वासुदेवो हि सर्वावासः ॥ १८ ॥

तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभास्वासुरीष्वेव योनिषु ॥ १९ ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥२०॥

आत्मनि च द्वेषवन्तः आत्मनो ह्यहितं निरयपातहेतुमाचरन्ति । तांश्चाहं आसुरीष्वेव योनिषु क्षिपामि ॥ २० ॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥

यतः कामादिकं त्रयं नरकस्यैव द्वारम्, तस्मादेतत्त्यजेत् ॥२१॥

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

न चैतत् पुरुषवचनमित्यनादरणीयम्, अपितु अनादि शास्त्रमत्र प्रमाणम्-इत्युच्यते

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥२३॥
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।

**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥**

शास्त्रविधिं त्यजतः स्वमनीषयैव कार्याकार्यविचारं कुर्वतः प्रत्युत नरकपातः। तस्मादात्मबुद्धया कार्याकार्यव्यवस्थां मा कार्षीरिति तात्पर्यम् ॥ २४ ॥

अत्र संग्रहश्लोकः

अबोधे स्वात्मबुद्धयैव कार्यं नैव विचारयेत् ।
किन्तु शास्त्रोक्तविधिना शास्त्रं बोधविवर्धनम् ॥ १६ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे षोडशोऽध्यायः ॥ १६ ॥



अथ

# सप्तदशोऽध्यायः

अर्जुन उवाच

**ये शास्त्रविधिमुत्सृज्य वर्तन्ते श्रद्धयान्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥**

शास्त्रविधिमनालम्ब्य ये व्यवहारमाचरन्ति, तेषां का गतिरिति प्रश्नः ॥ १ ॥

तदत्रोत्तरं श्रद्धानुसारेण दीयते श्रीभगवता—

श्रीभगवानुवाच

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥२॥**

तत्र चायमाशयः, शास्त्रं नाम किल पक्षपातारूषितबुद्धिपूर्वकत्वविहीनम्, तथा परामर्शदार्ढ्यरूपं बोधस्वातन्त्र्यादेव दृढपरामृष्टतया फलादिस्वभावम्, शुद्धविमर्शनिःष्यन्दवाक्तत्त्वपरमार्थपरब्रह्मस्वभावम्, स्वतन्त्रप्रसरतया आन्तराद्बोधस्वभावाद्बहिःप्रसरपर्यन्तम्, सुसूक्ष्मप्रणवादिरूपात् व्यवहारप्रसिद्धप्रवादपरम्परापर्यन्तम् । यदाह—

'तद्विदां च स्मृतिशीले ।'

इति । तच्च स्वत एव हिताहितोपदेशाय कार्याकार्यविवेचकम् । यस्य स्वभावत एव सत्त्वातिरेकसुकुमारं हृदयं, तेनाचरितं शास्त्रितमेव । अन्यस्तु रजस्तमःकलुषीकृतः शास्त्रोक्तमप्याचरन्नाचरति—शास्त्रार्थस्य कात्स्न्र्येनाननुष्ठानात् । शास्त्रं हि सत्त्ववतामेव फलवदिति शास्त्रमेवाह—

'यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च शीलं च स तीर्थफलमश्नुते ॥'

इति, नान्योऽसंयतत्वात् । तस्माच्छास्त्रार्थः परित्यक्तकामक्रोधमोहेषु सफल इति तात्पर्यमस्याध्यायस्य, तदेवैतत्प्रतायते स्पष्टार्थत्वाच्च न विव्रियते । किन्तु केवलं पाठविप्रतिपत्तिनिवारणायैव लिख्यते ॥ २ ॥

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥**
**यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।**
**भूतप्रेतपिशाचांश्च यजन्ते तामसा जनाः ॥ ४ ॥**

अशास्त्रविहितं घोरं तपस्तप्यन्ति ये जनाः ।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतनम् ।
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

सत्त्वानुरूपा–इत्यत्र सत्त्वशब्दः स्वभावपर्यायः । अयं पुरुषः–आत्मा श्रद्धया अन्यव्यापारोपरिवर्तिन्या अवश्यं संबद्धः । स च तन्मय एव बोद्धव्यः । अचेतनम्–अविवेकित्वात् । मां च कर्षयन्तः–शास्त्रार्थाननुष्ठानात् । अत एव ते स्वबुद्धिविरचितां तपश्चर्यां कुर्वाणाः, प्रत्युत तामसाः ॥ ६ ॥

आहारोऽपि सत्त्वादिभेदात् त्रिधा श्रद्धावत् । तथा यज्ञतपोदानानि,–तदुच्यते—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥
आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः
कट्वम्ललवणात्युष्णतीक्ष्णरूक्ष[1]विदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥
यातयामं गतरसं पूति[2] पर्युषितं[3] च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥

---

१ रूक्षाः–स्नेहशून्याः प्रियङ्ग्वादयः २ दुर्गन्धि ३ अतिक्रान्तरात्रिकम् ॥

यातयाममिति—याता यामा यस्य ॥ १० ॥

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमित्येव मनः समाधाय स सात्त्विकः ॥ ११ ॥

मनः समाधाय-निश्चयेनानुसन्धाय ॥ ११ ॥

अभिसन्धाय तु फलं दम्भार्थमपि चैव यः ।
इज्यते विद्धि तं यज्ञं राजसं चलमध्रुवम् ॥ १२ ॥

दम्भार्थमपीति । दम्भो-लोको मामेवंविधं जानीयादिति ॥१२॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

विधिहीनमिति-शास्त्रोक्तक्रियाहीनम् । तदेवासृष्टान्नादिभिर्विशेषणैर्वितन्यते ॥ १३ ॥

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

आर्जवम्-ऋजुता । (अगोप्यविषया धृष्टता) ॥ १४ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

सत्यमिति । अस्यैव स्वरूपनिरूपणं प्रियहितम्-इत्यनेन क्रियते । प्रियं च तत्काले, हितं च कालान्तरे । ईदृशं वाक्यं सत्यमित्युच्यते, नतु यथावृत्तकथनमात्रम् ॥ १५ ॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।

भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

भावः-आशयः, तस्य सम्यक् शुद्धिः भावसंशुद्धिः ॥ १६ ॥

श्रद्धया परयोपेतं तपस्तत्त्रिविधं नरैः ।

अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।

क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।

परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥

त्रिविधेऽपि तपसि श्रद्धा। सात्त्विकस्य हि तन्मयी एव श्रद्धा। राजसस्य तु रजसि-दम्भादावेव श्रद्धा । तमोनिष्ठस्य पुनः परोत्सादनादावेव श्रद्धा । इति त्रिविधमपि तपः श्रद्धयोपेतं मुनिराह ॥ १९ ॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।

देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥२०॥

दातव्यमिति--दद्यादिति नियोगमात्रं पालनीयमिति ॥ २० ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।

दीयते च परिक्लिष्टं तद्राजसमिति स्मृतम् ॥ २१ ॥

दोषाभिसन्धानाय परिक्लिष्टं-मितादिदोषात् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।

असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

दानस्य चासत्करणं तत्संप्रदानाद्यसत्करणात् । एवं लौकिकानां सात्त्विकादित्रिप्रकाराशयानुसारेण क्रिया व्याख्याता ॥ २२ ॥

इदानीं ये गुणत्रितयसंकटोत्तीर्णधियस्ते क्रियां कथमाचरन्तीति तादृक् प्रकार उच्यते—

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥
तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ।२५।
सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ गीयते ॥ २६ ॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

ओं-तत्-सत्-इत्येभिस्त्रिभिः शब्दैर्ब्रह्मणो निर्देशः–संमुखीकरणम् । तत्र ओम्–इत्यनेन शास्त्रार्थोऽयमादेहसंबन्धमूरीकार्य इति सूच्यते । तत्-इति सर्वनामपदेन सामान्यमात्राभिधायिना विशेषपरामर्शमात्रासमर्थेन फलानभिसंधानं ब्रह्मण्युच्यते; अभिसंधानस्य विशेषपरिग्रहमन्तरेणाभावात्, सकलविशेषानुग्राहित्वेऽपि सकलफलसंधाने सर्वकर्तृतायामपि विशिष्टफलायोगात् । सत्–इत्यमुया श्रुत्या प्रशंसाभिधीयते । क्रियमाणमपीदं यज्ञा-

दिकं, दुष्टमिति बुद्ध्या क्रियमाणं तामसतामेति । विशिष्टफला-
भिधानेन च क्रियमाणं न च सत्, बन्धाधायकमेवेति । तस्मात्
'कर्तव्यमिदम्'–इति मन्वाना यज्ञादि कुर्वाणा अपि न बध्य-
न्ते । अनेनैवाभिप्रायेणादिपर्वण्युक्तं—

'तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः ।
प्रसह्य वित्ताहरणं न कल्कस्तान्येव भावोपहतानि कल्कः ॥' ( महा॰ भा॰ )

इति । कल्कः–बन्धकः । स्वाभाविक इति 'ब्राह्मणेन निष्कारणं
षडङ्गं वेदादि अध्येतव्यम्'–इति । प्रसह्य–शास्त्रलोकप्रसिद्धोचि-
तया चेष्टया । भावेन–सत्त्वादिगुणत्रययोगिना चित्तेन उपहता-
न्येतान्येव बन्धकानि, नान्यथेति तात्पर्यम् । अतो यज्ञादि या-
वच्छरीरभावितया कार्यमेव । तदर्थे विहितं कर्म–अर्जनादि ।
यदि वा–ओम्–इत्यनेन समुपशान्तसमस्तप्रपञ्चम् । तत्–इत्यने-
नोद्भिद्यमानाविश्वतरङ्गपरामर्शमात्रात्मकेच्छास्वातन्त्र्यस्वभावम् ।
सत्–इत्यनेनेच्छास्वातन्त्र्यभरविजृम्भमाणभेदकम्, पूर्णत्वेऽपि ता-
वच्चित्रस्वभावतया भवनमिति प्रतिपाद्यते । तथा चोक्तं 'सद्भा-
वे साधुभावे च' इति । तेन परमं प्रशान्तं रूपं पुरस्कृत्य
दित्सा-यियक्षा-तितप्सात्मकेच्छातरङ्गसंगतं च मध्येकृत्य दानय-
ज्ञतपःक्रियाकारककलापपरिपूर्णं यच्चरमं वपुरिदमुल्लसितम्, एत-
त्खलु समं त्रितयमनर्गलस्य स्वाभाविकं रूपम्, इति कस्य
किं कथं कुतः क केन फलं स्यादिति ॥ २७ ॥

इदानीमश्रद्धावतः तामसं कर्म सर्वथैव निष्फलम्–कारकक-
लापसंयोजनसमुपजनितप्रयासमात्रफलमेव, इति सर्वथा अश्र-
द्धावता न भाव्यमित्युच्यते—

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।**
**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥**

असदिति—अप्रशस्तम् । तस्मात्प्रशस्ते कर्मणि यतमानानां सुखेनैव भवति शिवमिति शिवम् ॥ २८ ॥

अत्र संग्रहश्लोकः

स एव कारकावेशः क्रिया सैवाविशेषिणी ।
तथापि विज्ञानवतां मोक्षार्थे पर्यवस्यति ॥ १७ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते
श्रीमद्भगवद्गीतार्थसंग्रहे सप्तदशोऽध्यायः ॥ १७ ॥

अथ

# अष्टादशोऽध्यायः

अर्जुन उवाच

**संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥**

पूर्वमुक्तं 'स त्यागी स च बुद्धिमान्' इति । तथा 'स संन्यासी च योगी च न निरग्निः', इत्यादि । अतस्त्यागिसंन्यासिनोर्द्वयोः श्रवणात् विशेषजिज्ञासोरयं प्रश्नः ॥ १ ॥

अत्रोत्तरं—   श्रीभगवानुवाच

**काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**

काम्यानि–अग्निष्टोमादीनि । सर्वकर्मेति । सर्वेषां–नित्यनैमित्तिककर्मणां क्रियमाणत्वेऽपि फलत्यागस्त्यागः । अत्र चाध्याये यदवशिष्टं वक्तव्यमस्ति, तत्प्राक्तनैरेव तत्रभवद्भट्टभास्करादिभिर्वितत्य विमृष्टमिति किमस्माकं तद्गूढार्थप्रकाशनमात्रप्रतिज्ञानिर्वाहणसाराणां पुनरुक्तप्रदर्शनप्रयासेन ॥ २ ॥

तदत्रैव विशेषनिर्णयाय मतान्युपन्यस्यति—

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥**

दोषवत्–हिंसादिमत्त्वात्पापयुक्तम् । तत्कर्म त्याज्यं (न सर्वं शुभफलम्);–इति केचित्त्यागे विशेषं मन्यन्ते सांख्यगृह्या इव । अन्ये तु–मीमांसाकञ्चुकानुप्रविष्टा 'क्रत्वर्थो हि शास्त्रादवगम्यते' इति । तथा 'तस्माद्या वैदिकी हिंसा……………।' इत्यादिनयेनेतिकर्तव्यतांशभागिनी (हिंसा) हिंसैव न भवति, 'न हिंस्यात्' इति सामान्यशास्त्रस्य तत्र बाधनात् । श्येनाद्येव तु हिंसा ।

'फलांशे भावनायाश्च प्रत्ययोऽनुविधायकः' (श्लो० वा०)

इत्यन्यान् यज्ञादीन् हिंसादियोगिनोऽपि न त्यजेत् । शास्त्रैकशरणकार्याकार्यविभागाः पण्डिता इति मन्यन्ते ॥ ३ ॥

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥**
**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।**

---

१ ननु चाभिचारविधिना विहिता हिंसा कथं निषिध्येत?–इत्यत आह–'फलांशे' इति ।

यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥
एतान्यपि च कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥
नियतस्य च संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥
दुःखमित्येव यः कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥
न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जति ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥
नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥

तत्र त्वयं निश्चयः—प्राग्लक्षितगुणस्वरूपवैचित्र्यात्त्यागस्यैव सत्त्वरजस्तमोमय्या चित्तवृत्त्या क्रियमाणस्य तद्विशिष्टस्वभावावभासिवस्तुस्थित्या त्यागो नाम—परब्रह्मविदां सिद्ध्यसिद्ध्यादिषु समतया रागद्वेषपरिहारेण फलप्रेप्साविरहेण कर्मणां निर्वर्तनम् । अत एवाह—'राजसं तामसं च त्यागं कृत्वा न कश्चित्फलसंबन्धः' इति । सात्त्विकस्य तु त्यागात् शास्त्रार्थपाल-

१ श्रुतिस्मृतिविहितस्य

नात्मकं फलम् । त्यक्तगुणग्रामग्रहस्य पुनर्मुनेः सत्यतस्त्यागवाचोयुक्तिरुपपत्तिमती ॥ ११ ॥

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य नतु संन्यासिनां क्वचित् ॥ १२॥**

अत्यागिनाम्–फलमयानाम् ॥ १२ ॥

अधुना व्यवहारदशायामपि पञ्चस्वपि कर्महेतुषु स्थितेषु बलादेवामी अविद्यान्धाः पुमांसः स्वात्मन्येव सकलकर्तृभावभारमारोपयन्ति । अतो निजयैव धियात्मानं बध्नन्ति, नतु वस्तुस्थित्या अस्य बन्धः–इत्युपदिश्यते—

**पञ्चेमानि महाबाहो कारणानि निबोध मे ।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥१३॥**

कृतोऽन्तो निश्चयो यत्रेति कृतान्तः–सिद्धान्तः ॥ १३ ॥

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधा च पृथक्चेष्टा दैवमेवात्र पञ्चमम् ॥ १४ ॥**
**शरीरवाङ्मनोभिर्हि यत्कर्मारभतेऽर्जुन ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥**
**तत्रैवंसति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥**
**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥**

अधिष्ठानम्—विषयः । दैवम्—प्रागर्जितं शुभाशुभम् । पञ्चैते अधिष्ठानादयः सामग्रीरूपतां प्राप्ताः सर्वकर्मसु हेतवः । अन्ये तु अधिष्ठीयते अनेन सर्वं कर्मेति बुद्धिगतं रजो लब्धवृत्तिकं धृतिश्रद्धासुखविविदिषाविविदिषारूपपञ्चकपरिणामिकर्मयोगशब्द-वाच्यमधिष्ठानं क्वचित्प्रयत्नशब्देनोक्तम् । कर्ता—अनुसन्धाता बुद्धि-लक्षणः । करणम्—मनश्चक्षुरादि, बाह्यमपि च खड्गादि । चेष्टा—प्राणापानादिका । दैवशब्देन धर्माधर्मौ । ताभ्यां च बुद्धिगताः सर्वेऽपि भावा उपलक्षिताः । अन्ये त्वधिष्ठानमीश्वरं मन्यन्ते—अ-कृतबुद्धित्वादनिश्चितप्रज्ञतया । यः पुनरहंकारवियोगदार्ढ्येन प्रा-गुक्तयुक्तिशतशोधितेन कर्माणि करोति न स बन्धभाक्—कृत-बुद्धित्वादित्याशयः ॥ १७ ॥

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥

कर्मणि चोदना—प्रवृत्तीच्छा । तत्समये येषामबोधमात्रनिष्ठ-त्वाज्ज्ञानज्ञेयज्ञातृश्रुतिवाच्यता, तेषामेव सम्यग्ग्रहणरूपं यत्फला-भिसंधानेनात्मीयबुद्ध्या स्वीकरणम्—'अहमेतद्भोक्ष्ये, यतो मया कृतम्'—इत्येवंरूपम्, तत्समये तथा निर्वर्तनावसरे करणकर्मकर्तृश-ब्दाभिधेयत्वमाविष्टत्वात् । अतो योगिनामावेशो नास्तीति ता-न्प्रति करणादिगिरां प्रसङ्गो नास्ति, अपितु ज्ञानमात्रे एव तात्पर्यम् ॥ १८ ॥

अथैषां षण्णामपि संक्षेपेण गुणभेदाद्भेदं दर्शयितुमाह—

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।

प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥

गुणानां संख्यानं-निश्चयो यत्र, तत्र सांख्यीयकृतान्ते ज्ञानादि त्रिविधमुच्यते यत्तच्छृणिवति संगतिः । ज्ञानम्-इत्यनेन ज्ञाने क्रियायां च यत्करणं तद्द्विविधमुक्तम् । एवं कर्मेति ज्ञेयं कार्यं च । ज्ञाता कर्ता चेति ॥ १९ ॥

तत्र 'सर्वभूतेषु' इत्यादिना श्लोकत्रयेण ज्ञानकरणस्य त्रैरूप्यमुक्तम् । अत एव 'येन'-इति तृतीता । इयता च ज्ञानकरणसामान्यस्य स्वरूपमुक्तम् । 'नियतम्' इत्यादिना श्लोकत्रयेण कर्मणो ज्ञेयकार्यरूपस्य द्वैविध्यम् । 'मुक्तसङ्गः' इत्यादिना श्लोकत्रयेण तु कर्तुर्द्विरूपस्य संक्षेपेण स्वरूपम् । करणविशेषस्य स्वरूपभेदप्रतिपादनार्थं बुद्धेस्त्रैविध्यं निरूपितम्, तद्द्वारेण करणान्तराणामपि त्रैविध्यमुपलक्षितम् । करणस्य त्वितिकर्तव्यतापेक्षित्वादितिकर्तव्यतायाश्च धृत्यादिपञ्चकरूपत्वेऽपि श्रद्धायाः पूर्वमुक्तत्वाद्विविदिषाविविदिषयोश्च धृतिसुखाभ्यामाक्षेपात्तयोस्त्रैविध्यं 'धृत्या यया' इत्यनेन, 'सुखं त्विदानीम्'-इत्यनेन चोक्तम् । तदाह

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।

अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥२०॥

विभक्तेषु-देवमनुष्यादितया ॥ २० ॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।

वेत्ति सर्वेषु भूतेषु तद्राजसमिति स्मृतम् ॥ २१ ॥

पृथक्त्वेन-इह मे प्रीतिरिह मे द्वेषः,-इत्यादिबुद्ध्या ॥ २१ ॥

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहेतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

अहेतुकम्–कारणमविचार्यैव, अभिनिवेशावेशवशात् क्रोधरागादिग्रहणं यत्तत्तामससंज्ञम् ॥ २२ ॥

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

नियतम्–कर्तव्यमिति ॥ २३ ॥

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते क्लेशबहुलं तद्राजसमिति स्मृतम् ॥ २४ ॥

क्लेशैः–अविद्याद्यैः, बहुलम्–व्याप्तम् ॥ २४ ॥

अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

मोहात्–अभिनिवेशमयात् ॥ २५ ॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥

अहं कर्ता इति न वदन्, तच्छीलस्तद्धर्मा तत्साधुकारी वा यो भवतीति–अनहंवादी–इत्यनेन णिनिना व्यवहारमात्रसंवृतिवशेन योगिनोऽपि 'अहं करोमि'–इति वचो न निषिद्धम् ॥ २६ ॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्त्यते ॥ २७ ॥

अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः ।
विषादी दीर्घसूत्रश्च कर्ता तामस उच्यते ॥ २८ ॥

हर्षशोकान्वितः–सिद्ध्यसिद्ध्योः । निकृतिः–नैर्घृण्यम् ॥२८॥

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९ ॥

बुद्धिः–निश्चयः । धृतिः–सन्तोषः । सर्वो हि सुकृतं दुष्कृतं वा कृत्वा अन्ते 'अवश्यं कृतं करणीयं किमन्येन'–इति धियं गृह्णाति । अन्यथा क्रियाभ्यो व्युपरमे को हेतुः स्यात् । अतः सर्वस्यैव धृतिरस्तीति तात्पर्यार्थः । पदार्थस्त्वप्रसिद्धो व्याख्यायत एव ॥ २९ ॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या बुद्धिर्वेद सा सात्त्विकी मता ॥३०॥

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥३१॥

अयथावत्–असम्यक् ॥ ३१ ॥

अधर्मं धर्ममिति या बुध्यते तमसान्विता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा तामसी मता ॥३२॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा सात्त्विकी मता ।३३।

मनःप्राणेन्द्रियक्रियाः योगेन धारयति, यथा 'किं ममोप-

भोगादिभिः, सर्वथैवात्मारामो भूयासम्'-इति मन्वानः ॥ ३३ ॥

**यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ।**
**प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥**

प्रसङ्गेनेति-न तथाभिनिवेशेन ॥ ३४ ॥

**यया स्वप्नं भयं शोकं विषादं मोहमेव च ।**
**न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता ॥३५॥**

निद्राकलहादिष्वेव यया सन्तोषं बध्नाति तत्परतया,-सा तामसी धृतिः ॥ ३५ ॥

**सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।**
**अभ्यासाद्रमते यत्र दुःखान्तं च निर्यच्छति ॥ ३६ ॥**
**यत्तदात्वे विषमिव परिणामेऽमृतोपमम् ।**
**तत्सुखं सात्त्विकं विद्यादात्मबुद्धिप्रसादजम् ॥ ३७ ॥**

तदात्वे-अभ्यासकाले । विषमिव-जन्मशताभ्यस्तविषयसङ्गस्य दुष्परिहरत्वात् । उक्तं च श्रुतौ—

'क्षुरस्य धारा विषमा दुरत्यया ।'

इत्यादि । आत्मप्रसादाद्बुद्धिप्रसादो जायते,-अन्यस्यापेक्ष्यमाणस्याभावात् ॥ ३७ ॥

**विषयेन्द्रियसंयोगाद्यत्तदात्वेऽमृतोपमम् ।**
**परिणामे विषमिव तद्राजसमिति स्मृतम् ॥ ३८ ॥**

विषयेन्द्रियाणां परस्परसंयोगजं सुखम्; चक्षुष इव रूपसंबन्धात् ॥ ३८ ॥

---

१ नितरां प्राप्नोतीत्यर्थः ।

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥

निद्रातः—आलस्येन[1] प्रमादेन पूर्वं व्याख्यातेन यत्सुखं, तत्तामसम् ॥ ३९ ॥

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥

एवं कर्तृकर्मकरणानां बुद्धिधृत्योः सुखस्य च सत्त्वादिभेदभिन्नानां परस्पराङ्गाङ्गिभावबाध्यबाधकत्वसमुच्चयाद्वृत्तिक्रमयौगपद्याद्वियोगादपरिसंख्येयभेदत्वाद्विविधफलप्रसवसमर्थत्वम् । इत्यनेन कर्मणां प्राक् सूत्रितं गहनत्वं वितत्य सहेतुकं निर्णीतम् । सर्वे चैते देवतादिस्थावरान्ता गुणत्रयसंबन्धं नातिक्रामन्ति । उक्तं हि

'आ ब्रह्मणश्च कीटान्तं न कश्चित्तत्त्वतः सुखी ।
करोति विकृतीस्तास्ताः सर्व एव जिजीविषुः ॥'

इति । तत्त्वतो हि सुखं गुणातिक्रान्तमनसः नेतरस्येत्याशयः । एवमियता षण्णां प्रत्येकं त्रिस्वरूपत्वं धृत्यादीनां च प्रतिपादितम् । तन्मध्यात्सात्त्विके राशौ वर्तमानो दैवीं सम्पदं प्राप्त इह ज्ञाने योग्यः, त्वं च तथाविधः—इत्यर्जुनः प्रोत्साहितः । अधुना त्विदमुच्यते—यदि तावदनया ज्ञानबुद्ध्या कर्मणि भवान्प्रवर्तते, तदा स्वधर्मप्रवृत्त्या विज्ञानपूततया च न कर्मसंबन्धस्तव । अथैतन्नानुमन्यसे, तदवश्यं तव प्रवृत्त्या तावद्भाव्यम्; जातेरेव तथाभावे स्थितत्वात् । यतः सर्वः स्वभावनियतः कुतश्चिद्दोषात्तिरोहिततत्स्वभावः कश्चित्कालं भूत्वापि, तत्तिरोधाय-

[1] आलस्येनेत्यनन्तरं 'शठतया'—इत्यधिकः क० पाठः ।

कविगमे स्वभावं व्यक्तापन्नं लभत एव । तथाह्येवंविधो वर्णानां स्वभावः । एवमवश्यं भाविन्यां प्रवृत्तौ ततः फलविभागिता भवेत् ,–तदाह

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥
शमो दमस्तथा शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥ ४२॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
पर्युत्थानात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥
यतः प्रवृत्तिर्भूतानां येन विश्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥४६॥
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्विषम् ॥ ४७ ॥
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।

---

१ पर्युत्थानं–वर्णत्रयस्य पूर्वस्य शुश्रूषा, तद्रूपं कर्मेत्यर्थः । परिचर्यात्मकम् इति क० पाठः ।

सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेन तु कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥५१॥

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥

अहंकारं[1] बलं[2] दर्पं[3] कामं क्रोधं परिग्रहम्[4] ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥

भक्त्या मामभिजानाति योऽहं यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।

---

१ अनात्मनि शरीरादावात्मप्रत्ययरूपम् २ शक्याशक्यविवेकपरिहारेण कार्येषु हठं–बलम् ३ स्वल्पस्यापि सिद्धिलेशस्योपलब्धेश्चित्तोद्रेकम् ४ देहदारद्रविणादिषु सर्वस्वबुद्ध्या स्वीकारम् ५ परमात्माद्वैतप्रतिपत्तिलक्षणा या ज्ञानस्य परा निष्ठा,–सैव परा मद्भक्तिरित्यर्थः ।

मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥५६॥
चेतसा सर्वकर्माणि मयि संन्यस्य भारत ।
बुद्धियोगं समाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहंकारं न मोक्ष्यसि विनङ्क्ष्यसि ॥५८॥
यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैव व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥५९॥
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥६०॥

ब्राह्मणादीनां कर्मप्रविभागनिरूपणस्य स्वभावोऽवश्यं नातिक्रामतीति क्षत्रियस्वभावस्य भवतोऽनिच्छतोऽपि प्रकृतिः स्वभावाख्या नियोक्तृतामव्यभिचारेण भजते । केवलं तया नियुक्तस्य पुण्यपापसंबन्धः । अतो मदभिहितविज्ञानप्रमाणपुरःसरीकारेण कर्माण्यनुतिष्ठ । तथा सति बन्धो निवर्त्स्यति । इत्यस्यार्थस्य परिकरबन्धघटनतात्पर्यं महावाक्यार्थस्य । अवान्तरवाक्यानां स्पष्टार्थः । समासेन संक्षेपेण ज्ञानस्य प्रागुक्तस्य । निष्ठां वाग्जालपरिहारेण निश्चितामाह–'बुद्ध्या विशुद्धया'–इत्यादि । सर्वमेतद्व्याख्यातप्रायमिति न पुनरायस्यते ॥ ६० ॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।

भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥६१॥

तमेव शरणं गच्छ सर्वभावेन भारत ।

मत्प्रसादात्परां सिद्धिं स्थानं प्राप्स्यसि शाश्वतम् ।६२

एष ईश्वरः परमात्मावश्यं शरणत्वेन ग्राह्यः । तत्र ह्यधिष्ठातरि कर्तरि बोद्धरि स्वात्ममये विमृष्टे, न कर्माणि स्थितिभाञ्जि भवन्ति । नहि निशिततरनखरकोटिविदारितसमदकरिकरटगलितमुक्ताफलनिकरपरिकरप्रकाशितप्रतापमहसि सिंहकिशोरके गुहामधितिष्ठति, चपलमनसो विद्रवणमात्रबलशालिनो हिरणपोतकाः स्वैरं स्वव्यापारपरिशीलनापटुभावमवलम्बन्ते इति । 'तमेव शरणं गच्छ'– इत्युपक्रम्य 'मत्प्रसादात्'– इति निर्वाहवाक्यमभिदधद्भगवान् परमात्मानमीश्वरं वासुदेवं चैकतया योजयतीति ॥ ६२ ॥

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।

विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥

तदेवेदं ज्ञानमुक्तम् । गुह्यात्– वेदान्तादपि गुह्यम्– परमाद्वैतप्रकाशनात् । एतच्चाशेषेण विमृश्येति– तात्पर्यमत्र विचार्येत्यर्थः । तच्च तात्पर्यं यथावसरमस्माभिः शृङ्गग्राहिकयैव प्रकाशितं यद्यपि, तथापि स्फुटमशेषविमर्शनं प्रदर्श्यते ;–उपादेयतमं ह्यदः । नास्मिन्निरूप्यमाणे श्रूयमाणे वा मतिस्तृप्यति ॥ ६३ ॥

गुह्यतमं यदत्र निश्चितम्, तज्ज्ञानमिदानीं शृणु ;– इत्याह

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।

इष्टोऽसि मे दृढमतिस्ततो वक्ष्यामि ते हितम् ॥६४॥

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥६५॥**

मन्मना भव–इत्यादिना शास्त्रे ब्रह्मार्पण एव सर्वथा प्राधान्यम्–इति निश्चितम् । ब्रह्मार्पणकारिणः शास्त्रमिदमर्थवदित्युक्तम् ॥६५॥

आह च–

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥६६॥**

सर्वधर्मानिति । यदिदं युद्धकरणे प्रासङ्गिकबन्धुवधादि, तस्य सर्वस्याहं कर्ता–इत्यात्मधर्मतां परित्यज्य–'तथाचार्यादिहननक्रियानिषेधे मम धर्मो भविष्यति'–इति मनसा विहाय । मामेवैकं सर्वकर्तारं परमेश्वरं स्वतन्त्रं शरणं सर्वस्वभावाधिष्ठायकतया व्रज । अत एवाहं सर्वज्ञः सर्वेभ्यः पापेभ्यस्त्वां मोक्षयिष्यामीति । मा शुचः–किंकर्तव्यतामोहं मा गाः ॥६६॥

**इदं ते नातपस्काय नाभक्ताय कदाचन ।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥६७॥**

अस्य ज्ञानस्य गोप्यमानत्वं सिद्धिदम्–सर्वजनाविषयत्वात् । तपसा तावत्पापग्रन्थौ विशीर्णे कुशलपरिपाकोन्मुखता भवति । इति पूर्वं तपः, तपसः श्रद्धा जायते । सैवात्र भक्तिः । श्रद्धाप्युपजाता कदाचिन्न प्ररोहति– सौदामनीव क्षणदृष्टनष्टत्वात् । ततस्तत्प्ररोहे श्रोतुमिच्छा भवति । इयदपि च कस्यचिदनीश्वरे वस्तुनि शुष्कसांख्यादिज्ञाने भवति । सेश्वरेऽपि वा कस्यचित्क-

लार्थितया फलमेव प्रधानीकृत्य भगवन्तं च स्वात्मानं तदुपक-रणपात्रीकरणेन न्यक्कृत्य भवेत् । यदुक्तं

'पुरुषश्च कर्मार्थत्वात्' 'कर्माण्यपि फलार्थत्वात् ।' (पू० मी० सू०)

इति । एवमुभयथापि भगवत्यसूयैवानादर इत्यर्थः ॥ ६७ ॥

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा स मामेष्यत्यसंशयः ॥ ६८ ॥

भक्तिमिति—एतदेव मयि भक्तिकरणं ; मद्भक्तेष्वेतन्निरूपणम् । अभिधास्यति— आभिमुख्येन शास्त्रोक्तप्रक्रियया धास्यति— वितरिष्यति । स मन्मयतामेतीति विधिरेवैष नार्थवादः । एवमन्यत्र ।६८।

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभांल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनञ्जय ॥ ७२ ॥

अर्जुन उवाच

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३ ॥

नष्टो मोहः–इत्यादिना युद्धप्रवृत्तिस्तावदर्जुनस्योत्पन्ना, नतु सम्यग्ब्रह्मवित्त्वं जातम्–इति सूचयन्भाविनोऽनुगीतार्थस्यावकाशं ददाति ॥ ७३ ॥

सञ्जय उवाच

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यतरं महत् ।
योगं योगीश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥७५॥
राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च पुनः पुनः ॥ ७६ ॥
तच्च संस्मृत्य परमं रूपमत्यद्भुतं हरेः ।
विस्मयो मे महाराज प्रहृष्ये च पुनः पुनः ॥ ७७ ॥
यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

संजयवचनेन संवादमुपसंहरन्नेतदर्थस्य गाढप्रबन्धक्रमेण निरन्तराचिन्तासन्तानोपकृतनैर्यन्तर्यादेव चान्ते सुपरिस्फुटानिर्विकल्पानुभवरूपतामापाद्यमानं स्मरणमात्रमेव परब्रह्मप्रदायकम्– इत्युच्यते । एवं भगवदर्जुनसंवादमात्रस्मरणादेव तत्त्वावाप्त्या श्रीविजयविभूतय इति शिवम् ॥ ७८ ॥

अत्र संग्रहश्लोकः

भङ्क्त्वा ज्ञानविमोहमन्थरमयीं सत्त्वादिभिन्नां धियं
प्राप्य स्वात्मविभूतसुन्दरतया विष्णुं विकल्पातिगम्।
यत्किंचित्स्वरसोद्यदिन्द्रियनिजव्यापारमात्रस्थिते-
र्हेलातः कुरुते तदस्य सकलं संपद्यते शङ्करम् ॥ १८ ॥



इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते
श्रीमद्भगवद्गीतार्थसंग्रहेऽष्टादशोऽध्यायः ॥ १८ ॥



श्रीमान्कात्यायनोऽभूद्वररुचिसदृशः प्रस्फुरद्बोधवृत्त-
स्तद्वंशालङ्कृतो यः स्थिरमतिरभवत्सौशुकाख्योऽतिविद्वान् ।
विप्रः श्रीभूतिराजस्तदनु समभवत्तस्य सूनुर्महात्मा
येनामी सर्वलोकास्तमसि निपतिताः प्रोद्धृता भानुनेव ॥ १ ॥
तच्चरणकमलमधुपो भगवद्गीतार्थसंग्रहं व्यदधात्।
अभिनवगुप्तः सद्द्विजलोटककृतचोदनावशतः ॥ २ ॥
अत इदमयथार्थं वा यथार्थमपि सर्वथा नैव
विदुषामसूयनीयं कृत्यमिदं बान्धवार्थं हि ॥ ३ ॥
अभिनवरूपा शक्तिस्तद्गुप्तो यो महेश्वरो देवः ।
तदुभययामलरूपमभिनवगुप्तं शिवं वन्दे ॥ ४ ॥



परिपूर्णोऽयं श्रीमद्भगवद्गीतार्थसंग्रहः । कृतिस्त्रिनयनचरणसरोरुह-
चिन्तनलब्धप्रसिद्धेरभिनवगुप्तस्येति शिवम् ॥



ॐ

सांख्ययोगादिशास्त्रज्ञः पाणिनीये कृतश्रमः ।
शिवार्करश्मिसंपातव्याकोशहृदयाम्बुजः ॥
महामाहेश्वरः श्रीमान्राजानकमहेश्वरः ।
शैवशास्त्रगुरुः स मे वाग्पुष्पैरस्तु पूजितः ॥



शिवभक्त्यमृतास्वादात्तृणीकृतरसान्तरः ।
राजानलक्ष्मणाभिख्यः सुधीर्नारायणात्मजः ॥
हृदन्तर्वर्त्तिना साक्षाच्छ्रीरामेण प्रचोदितः ।
प्राकाश्यमनयद् गीताव्याख्यामभिनवोदिताम् ॥



इति निवेदयति शिवभक्तानुचरः
राजानकलक्ष्मणः ।



